# ॥ तैत्तिरीयश्रीनिवासतीर्थीयप्रारंभः ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ ज्ञानानंदमुखैःसर्वगुणैःपूर्णमभीष्टदं ॥ गुर्वाराधित पादाब्जं(वंदे)भजेहंबादरायणं ॥ १ ॥ श्रीमदानंदतीर्थार्यचरणौप्रणमाम्यहं ॥ रुद्रादिसर्वविबुधैःसंसेव्याविष्टदौसतां ॥२॥ श्रुति क्षीराब्धिमामथ्यधीमंदरमहीभृता ॥ प्राप्तान्यायसुधायेनतंजयेंद्रमहंभजे ॥ ३ ॥ येनवेदांतभाष्याणिविवृतानिमहात्मना ॥ तंवंदेव्यासतीर्थाख्यंजयराजनिषेवकं ॥ ४ ॥ विद्याधिराजादिमुनींस्तथावेदेशयोगिनः ॥ छांदोग्यभाष्यसट्टीकाकर्तॄन्वंदेनि रंतरं ॥ ५ ॥ श्रीमध्वशास्त्रंसमुदीर्यमेस्मिन्विश्वासहेतोःसमदर्शयन्ये ॥प्रदानसूत्रप्रतिपाद्यभावंवंदेगुरूंस्तान्यदुवर्यसंज्ञान् ॥६॥ अथैतत्कृपयाश्रीनिवासाख्यायुतसूरिणा ॥ तैत्तिरीयोपनिषदोभाष्यंव्याक्रियतेमया ॥ ७ ॥ बुधैरपिसुदुर्लेभेग्रंथेयन्ममसाहसं ॥ तत्पारयंतुनिपुणागुरुपादरजःकणाः ॥८॥ इहहिविविधसांसारिकदुःखदर्शनेनविरक्तस्यशमदमादिमतोमुमुक्षोरधिकारिणःआत्यं तिकानिष्टनिवृत्तीष्टप्राप्तिहेतुभूतभगवत्स्वरूपज्ञानायप्रवृत्तापीयंतैत्तिरीयोपनिषदन्यथाव्याख्यानावरुद्धत्वेननतज्ज्ञापनसमर्थेति मन्यमानोभगवानानंदतीर्थमुनिस्तांयथावद्व्याचिख्यासुःस्वयमंतरायविधुरोप्यनवरतमीश्वरप्रवणकायकरणवृत्तिरपिनिरंतरायं । प्रारिप्सितपरिसमाप्तेःप्रचयस्यचहेतुतयाऽविगीतशिष्टाचारपरंपरावगतमेतदुपनिषत्प्रतिपाद्यगुणवद्भगवत्स्तुतिरूपंमंगलंशिष्यशि क्षणार्थंकुर्वन्नेवतच्छरणागतिंप्रार्थयते ॥ **सत्यंज्ञानमित्याद्यपद्येन** ॥ एमीत्युत्तमपुरुषप्रयोगादेवाहमितिकर्तालभ्यते । एमि

---

भाष्यं ॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ सत्यंज्ञानमनंतमानंदंब्रह्मसर्वशक्तयेकं ॥ सर्वैर्देवैरीड्यं विष्णवाख्यंसर्वदैमिसुप्रेष्ठं ॥ १ ॥

प्रामुया । इण्गताविति धातोः । शरणमितिशेषः । तथाचाहंसत्यत्वादिगुणोपेतंब्रह्मशरणंएमिइतिक्रियाकारकसंबंधः । स्तुति
पदानांचविशेष्यप्रशंसैवप्रयोजनमितिसिद्धमेव । सत्यादिशब्दार्थस्तुवक्ष्यमाणरीत्यावगंतव्यः । सर्वशक्ति सर्वविषयशक्त्युपेतं
एकं स्वगुणरूपाद्यभिन्नं । सर्वैर्देवैरेतदुपनिषत्प्रवर्तकैर्ब्रह्मवरुणादिभिरीड्यंस्तुत्यं । ईडस्तुतावितिधातोः । विष्ण्वाख्यं सर्वत्र
प्रविष्टत्वेनविष्णुशब्दवाच्यं । विष्णुःसर्वप्रवेशित्वादितिगीताभाष्योक्तेः । ब्रह्मेतिविशेष्यनिर्देशः । नममपरब्रह्मशरणागतिप्रार्थ
नंविघ्नविरहादिप्रयोजनोद्देशेनकादाचित्कं । किंतुस्वभावादेवेत्याशयेनोक्तंसर्वदेति । अत्रसत्यंज्ञानमनंतमितिसत्यत्वादित्रयं
आनंदोब्रह्मेत्यनेन कोह्येवान्यादित्यादिनाचआनंदत्वं इदंसर्वमसृजतेतिसर्वसृष्ट्युक्त्याऽर्थात्सर्वशक्तित्वं आनंदोब्रह्मेतिव्यजा
नादित्यनेनैवगुणाभिन्नार्थकमेकत्वं सयश्चायंपुरुषइत्यादिनारूपाभेदार्थकंचैकत्वं तन्नमइत्युपासीतेतिसर्वदेवेड्यत्वं तत्सृष्ट्वातदे
वानुप्राविशदितिविष्णुत्वंचोक्तमितिज्ञातव्यं । अधिकार्युत्तमवाय्ववतारभूतस्यभगवतआनंदतीर्थमुनेः परब्रह्म सुप्रेष्ठमितिप्रसि
द्धमेवेतिज्ञातव्यं । अधिकृतैवहिदेवतास्वविषयग्रंथप्रबोधादिकंसंपादयतीतिभावः ॥ १ ॥ योहवाऽविदितार्षछंदोदैवतब्राह्मणेन
मंत्रेणयजतियाजयतिवाअध्यापयतिवास्थाणुंवर्छतिगर्तेवापद्यतेप्रवामीयतेपापीयान्भवतीतिश्रुतौऋष्याद्यज्ञात्वाविद्याभ्यासिनो
ऽनर्थोक्तेस्तज्ज्ञानंतावदवश्यमपेक्षितं । तत्रब्राह्मणपदोपलक्षितार्थज्ञानंव्याख्यानादेवभविष्यति । प्रायश्छंदोबद्धत्वंनास्त्येव ।
तदुपनिबद्धत्वक्षरपरिगणनयातज्ज्ञानंसुशकमेवातऋषिदेवतेज्ञापयन्नाह ॥ आदित्यसंस्थितादिति ॥ आदित्याद्ब्रह्मासु ॥ २ ॥

भा० । आदित्यसंस्थिताद्विष्णोःश्रुत्वाब्रह्मायथाहरि । तुष्टावतत्प्रकारेणवरुणोक्तेनवैभृगु । विष्णुमस्तौत्

श्रावेतिवचनांतरगतिकथनायआदित्यसंस्थिताद्विष्णोरित्युक्तं । आदित्यसंस्थिताद्विष्णोःसकाशादादौब्रह्माभगवत्स्वरूपंशु श्रावेतिग्राह्यं । श्रुत्वाचहरिंतुष्टाव । सब्रह्मायथायेनप्रकारेणहरिंतुष्टाव तंप्रकारंवरुणायप्राहेतिवक्तव्यं । पश्चात्सवरुणः तेनैवप्रकारेणहरिंतुष्टावेतिवर्तते । सवरुणोयेनप्रकारेणहरिंतुष्टावतंप्रकारंस्वपुत्रायभृगवेप्राहेतिवक्तव्यं । अनंतरंसभृगुर्व रुणोक्तेनैवप्रकारेणविष्णुंअस्तौदितियोजनाद्रष्टव्या । सप्रकारःकइत्यतआह ॥ तथेति ॥ तंप्रकारमित्यर्थः । अत्रतथा प्राहशन्नोमित्रादिकाश्रुतिरितिवचनेन ब्रह्मादिभिर्देवैःविष्णवादिभ्यःश्रुत्वाकृतास्तुतिरन्यैवास्ति । शन्नोमित्रइत्यादिकाश्रु तिस्तुकेवलंतत्समाख्यारूपैव नत्वेषैवविष्णवादिभिर्ब्रह्मादीन्प्रत्युपदिष्टाहरिंप्रतिब्रह्मादिकृतस्तुतिरूपाचेतिप्रतीयते अतस्तांप्र तीतिंयजुःसंहितायामेवस्थानांतरगतवाक्योदाहरणेनवारयति ॥ यदुवाचेति ॥ सुपांसुलुगित्यादिनाबहुवचनस्यैकवचना देशः । तथाच यत् यानि तत् तानीत्यर्थः । ब्रह्मणइतिशेषः । सूर्यमंडलस्थःसूर्योपिभवतीत्याशंकापरिहारायपरःपुमान्हरिरि त्युक्तं । वरुणे वरुणाय । शन्नोमित्रादिभिः शन्नोमित्रःशंवरुणइतिप्रभृतिभिः । अन्नादिमयंपंचात्मकं अन्नमयादिरूपेणपंचा त्मकमित्यर्थः । मयटोविकारार्थकत्वात्कथमन्नमयादीनांपंचानांविष्णुत्वमित्याशंक्यमयटांप्राचुर्यमेवार्थइत्याशयेनोक्तंपूर्णमिति । तथाचप्रचुरान्नादिरूपमित्यर्थः । विस्तरस्तु महाभोक्तामहाभोग्यइत्यर्थोन्नमयेभवेदित्याद्यनुव्याख्यानोक्तप्रकारेणद्रष्टव्यः ।

भा० । तथाप्राहशन्नोमित्रादिकाश्रुतिः । यदुवाचहरिस्सूर्यमंडलस्थ.पर.पुमान । ब्रह्मातदाह्वरुणेवरुणोभृगवेपितु । शन्नोमित्रादिभिर्वाक्यैस्तै रेवहरिमस्तुवत् । भृगु.पंचात्मकंपूर्णमन्नादिमयमच्युतं ।

अच्युतं अन्नमयादिशब्दार्थभूतैर्गुणैःकदापिच्युतिरहितम् । मुक्तगीतावसानैः एतत्सामगायन्नास्तेइत्यारभ्य यएवंवेदेत्यंतैः । तथाचसूर्यमंडलस्थःपरःपुमान्हरि र्यत् यानि शन्नोमित्रइत्यादिवाक्यानिब्रह्मणेप्राह तत्तान्येववाक्यानि ब्रह्मा वरुणेवरुणाय प्राह । सवरुणस्तान्येववाक्यानिभृगवेप्राह । सभृगुस्तैर्वरुणोपदिष्टैरेवशन्नोमित्रइत्यादिभिर्मुक्तगीतावसानैर्वाक्यैःपूर्णमच्युतं अन्नमयादिपंचात्मकंहरिमस्तुवत् । अनंतरंशन्नोमित्रादिभिर्मुक्तगीतावसानैर्वाक्यैस्तेनभृगुणास्तुतोजनार्दनःसुप्रीतःसन् ज्ञानं शाश्वतींस्वात्मनिभक्तिंचप्रददावित्यादियोजनाद्रष्टव्या । अनेनास्याउपनिषदोविष्णुब्रह्मवरुणभृगवऋषयः । अन्नमयादिरूपी हरिर्देवता यथासंभवमनुष्टुबादिछंदइत्युक्तंभवति । नन्वस्याउपनिषदोविष्णुऋषिरित्ययुक्तं । शन्नोमित्रइत्यादिनाविष्णो र्मित्रादिकंप्रतिसुखप्रार्थनस्य नमस्तेवाय्वितिवायुंप्रतिनमस्कारकरणस्यचा योगादित्यतआह ॥ भृगुवाक्यतयेति ॥ आदिपदे नत्वमेवप्रत्यक्षमितिवायुंप्रतिस्तुतिकरणंमित्रादिकंप्रतिसुखप्रार्थनंचग्राह्यं । उत्तरत्रब्रह्मविद्यामनुतिष्ठन्भृगुर्विघ्नपरिहारायनमस्ते वाय्वित्यादिरूपेणवायुनमस्कारादिकंकरिष्यतीत्येवंभृगुवाक्यानुवादरूपेणहरिर्ब्रह्मणेप्रोवाच नतुस्ववाक्यतयाऽतोनोक्तदोषः । तथाब्रह्मणोपिमित्रादिकंप्रतिसुखप्रार्थनायोगात्सोपिभृगुवाक्यतयैववरुणायप्रोवाचेतिचशब्दार्थः । इमंप्रकारमन्यत्राप्यतिदिश ति ॥ एवंवचइति ॥ एवमित्यस्यावृत्तिः । चशब्दस्यात्राप्यन्वयः । सचात्रावधारणार्थः । तथाचसुबहुदर्शिषु अतिबह्वर्थदर्शि

भाष्यं ॥ मुक्तगीतावसानैस्तुस्तुतस्तेनजनार्दनः । सुप्रीत प्रददौज्ञानंस्वात्मभक्तिंचशाश्वतीमित्यादियजुस्संहितायां । भृगुवाक्यतयावायुनम स्कारादिकंहरि । प्रोवाचब्रह्मणेचैवंवचस्सुबहुदर्शिष्वितिच ॥ १ ॥

षुसर्वज्ञेषुविष्णवादिषुऋषित्वेनविवक्षितेषुसत्सु यत्एवंवचः नीचान्प्रतिप्रार्थनादिरूपंवच स्तत् एवंच एवमेव परोक्तानुवादरूपत्वेनैवव्याख्येयं नतुसुबहुदर्शिविष्णवादिवाक्यतयैवेतिज्ञातव्यं । यथाहयग्रीवमुखोद्गीर्णायांछांदोग्योपनिषदि श्यामाच्छबलंप्रपद्येशबलाच्छामंप्रपद्ये । धूत्वाशरीरंब्रह्मलोकमभिसंभवामीत्यादिकंनस्ववाक्यतयाहयवदनोदृष्टवान् किंत्वितरेषांवाक्यतयैव । यथोक्तंछांदोग्यभाष्ये । हयग्रीवमुखोत्थानियानिवाक्यानितानितु । रमाददर्शतान्येवब्रह्मातान्येवनारदः । यानिविष्णोरयोग्यानिप्रार्थनाद्यात्मकानितु । तान्युत्तरेषांवाक्यानिभविष्याण्यवदद्धरिः । एवंरमातथाब्रह्माछांदोग्योपनिषद्भिसेति । इदमुपलक्षणं । अविघ्नत्वमभीप्सूनांशिष्याणांचार्थेदृष्टवानित्यपिद्रष्टव्यं । यथोक्तमैतरेयभाष्ये । वाङ्मइत्यादिकंखंडं विष्णुप्रार्थनरूपकं । अविघ्नत्वमभीप्सूनांशिष्याणांदृष्टवान्हरिरिति । तदनेनप्रबंधेनैतदुपनिषदोधिकारिविषयप्रयोजनाभिसंबंधोपिदर्शितोभवति । ब्रह्मादीनामधिकारिणां अन्नयादिपंचरूपस्यविष्णोर्विषयस्य मोक्षस्यप्रधानस्यज्ञानभक्त्यादेरवांतरस्यचप्रयोजनस्यच सूचितत्वात् । अतोयुक्तमेतदुपनिषदोव्याख्यानंगहनार्थत्वाच्चेति ॥ १ ॥ **ततश्चशन्नोमित्र इत्यादेरयमक्षरार्थः** ॥ आदित्यसंस्थितोविष्णुःब्रह्माणंप्रति ब्रह्मविद्यामनुतिष्ठन्भृगुर्विघ्नपरिहारार्थमेतद्विद्याप्रवर्तकत्वादेतद्विद्याप्रतिपाद्यत्वाद्वाइंद्रियादिप्रेरकत्वाद्वामित्रादिदेवान्प्रार्थयतइत्याह ॥ **शन्नोमित्रइत्यादिना** ॥ मित्रोनःशंसुखमुद्दिश्यभ

उप० ॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ ओं शन्नोमित्रश्शंवरुणः । शन्नोभवत्वर्यमा । शन्नइंद्रोबृहस्पतिः । शन्नोविष्णुरुरुक्रमः ।

वतु नःसुखप्रदोभवत्वित्यर्थः । एवंवरुणाद्याःदेवाःनःशमुद्दिश्यभवंत्वित्यर्थः । उरुक्रमइतिविष्णोर्विशेषणं । उरुरुत्कृष्टःक्रमः पराक्रमोवापादविक्षेपोवायस्यासावुरुक्रमइत्यर्थः । ब्रह्मणेचतुर्मुखायनमः । हेवायोतेतुभ्यंनमः । वायोःब्रह्मविद्याप्रवर्तकेषुमुख्यत्वात् परब्रह्मणोमुख्याधिष्ठानत्वाद्वक्ष्यमाणसंहितापंचाधिकरणाभिमानित्वाच्च पुनस्तंवायुंअपरोक्षतःप्रार्थयते ॥ त्वमेवेति ॥ त्वंप्रत्यक्षं अक्षमक्षंप्रतिप्रेरकतयास्थितत्वात्प्रत्यक्षशब्दवाच्योसि । यथोक्तंबृहद्भाष्ये । तमेताःसप्ताक्षितयःउपतिष्ठंतइत्यत्र दक्षिणाक्षिस्थितंवायुंसप्तदेवाउपासतेइति । ब्रह्मा भाविब्रह्मपदयोग्यः । अथवाब्रह्म परब्रह्माधिष्ठानभूतः । अधिकारिवर्गेषुपूर्णोवाऽसि । त्वामेवप्रत्यक्षंब्रह्मावादिषमित्यंतेवक्ष्यमाणत्वादत्रापित्वंत्वामित्यर्थः । तथाचप्रत्यक्षंब्रह्मभूतंचत्वंत्वांपंचाधिकरणादिप्रतिपाद्यतया वदिष्यामि शिष्येषुउपदिशामि । ऋतंसत्यमित्यत्रत्वामित्यनुवर्तते । ऋतंयथार्थविज्ञानंसत्यंतत्पूर्विकाकृतिरितिवक्ष्यमाणरीत्या ऋतंयथार्थज्ञानवंतं सत्यंयथार्थज्ञानपूर्वकंवक्तारंकर्तारंचेत्यर्थः । यद्वा ऋतं यथावत् सर्वाधिकारिवर्गेषुउत्तमतयावगतं सत्यंसाधुगुणैस्ततंसर्वनियंतारंत्वामित्यर्थः । यथोक्तंवाङ्मेमनसीतिखंडेऐतरेयभाष्येऋतंयथावदवगतं सत्यंसाधुगुणैस्ततंसर्वनियंतारमिति । एवमपरोक्षतःप्रार्थयित्वापरोक्षतोपिप्रार्थयते ॥ तन्मामवत्विति ॥ यथोक्तंवाङ्मइत्यत्रैवऐतरेयभाष्ये तन्मामवत्वितितस्यैवपरोक्षतःप्रार्थनमिति । तत्वायुरूपंब्रह्म श्रोतारंमामवतु तत्वक्तारंविद्योपदेष्टारं चावतु । पुनरवतुमामवतुवक्तारमित्युक्तिरादरार्था ।

उप० ॥ नमोब्रह्मणे । नमस्तेवायो । त्वमेवप्रत्यक्षंब्रह्मासि । त्वमेवप्रत्यक्षंब्रह्मवदिष्यामि । ऋतंवदिष्यामि । सत्यंवदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतुमां । अवतुवक्तारं । ओंशांतिश्शांतिश्शांतिः ॥ १ ॥

उत्तरत्रप्रवर्तनीयायां विद्यायांप्रसक्तविघ्नानांशांतिरस्त्वित्याह ॥ **शांतिरिति** ॥ आध्यात्मिकाधिदैविकाधिभौतिकविघ्नपरिहाराभिप्रायेणशांतापृथिवीशिवमंतरिक्षमित्यादिश्रुतेर्भौमांतरिक्षदिव्यविघ्नपरिहारार्थंच त्रिवारंशांत्युक्तिरितिद्रष्टव्यं ॥ १ ॥

**अथभाष्यार्थः** ॥ ब्रह्मविद्याभ्यसनेच्छोरधिकारिणःपूर्वंशिक्षणीयमर्थंप्रतिजानतेऋषयः ॥ **शीक्षामिति** ॥ तत्रवर्णस्वरइत्यादौ वर्णाद्युच्चारणस्थानादीनिज्ञातव्यानीत्युक्त्याअस्याउपनिषदोऽब्रह्मविद्यात्वंप्रतीयते अतस्तांनिराकर्तुंवर्णादिशब्दषट्कंभगवतिनिरूप्यदर्शयति ॥ **वरणीयइत्यादिना** ॥ वरणीयोभजनीयः सर्वभक्तैःस्वीकर्तव्योवा । स्वरतेःस्वस्मिन्रमणात् । मानंज्ञानंलयश्चैवमर्यादाचापिकथ्यतइत्यभिधानात्मानादितिल्यप्लोपनिमित्तापंचमी । मानं भक्तानामपमृतत्वादिरूपंलयंनाशंपरिहृत्यभक्तानांत्राता । यद्वामानात् ज्ञानंप्रदायत्रातेत्यर्थः । संततः सम्यक्देशतःकालतःगुणतश्चततोव्याप्तः । वर्णादिशब्दवाच्यत्वे वरणीयत्वादिकंनिमित्तमित्युक्तं तदुपलक्षणपरमित्यभिप्रेत्योक्तार्थेप्रमाणमाह ॥ **वर्णादिवाचकमिति** ॥ आदिपदेनस्वरमात्रादिग्रहणं । तथाचवरणीयत्वादिनिमित्तेनवर्णादिकंवाचकंयस्यतत्वर्णादिवाचकमित्यर्थः । वर्णादिशब्दप्रतिपाद्यमितियावत् । विष्णोरूपमित्यन्वयः । वर्णादिनामकं वर्णःस्वरइत्यादिनामकं वर्णादिसंस्थंच वर्णोदात्तादिस्वरसंस्थंनियामकतयायतोऽतः । अनेननिमित्तेनवर्णादिनामकमितिनिमित्तांतरकथनं । निमित्तांतरंचाह ॥ **पुंस्विति** ॥ पुंसुस्थित्वावर्णस्वराद्युच्चारणादि

भा० ॥ वरणीयोवर्णः । स्वरतेस्तुस्वरः । मानात्त्रातामात्रा । बलरूपः । समश्चसर्वरूपेषु । संततश्च ॥ वर्णादिवाचकंरूपंज्ञेयंवर्णादिनामकं । विष्णोर्वर्णादिसंस्थंचपुंसुतत्तत्क्रियाप्रदं ॥ २ ॥

क्रियाप्रदं चयतोऽतोवर्णादिनामकमित्यर्थः ॥ २ ॥(अथखंडार्थः ॥) ब्रह्मविद्याभ्यसनेच्छोरधिकारिणःपूर्वंशिक्षणीयमर्थंप्रतिजानतेऋषयः ॥ शीक्षामिति ॥ शिक्ष्यतइतिशीक्षा शिक्षणीयमर्थमित्यर्थः । दीर्घस्तुशिक्षणीयार्थस्यावश्यकत्वद्योतकः । व्याख्यास्यामोविशेषेणवक्ष्यामः । तामेवशिक्षामाहुःवर्णइत्यादिना । वर्णःज्ञातव्यइतिशेषः । वर्णः अकारादिवर्णानामुच्चारणस्थानंकंठादिज्ञातव्यं । स्वरः उदात्तानुदात्तस्वरितादिरूपोज्ञातव्यः । मात्रा अकारादिरूपएकैकोवर्णोज्ञातव्यः । बलं वर्णोच्चारणहेतुभूतःस्पृष्टेषत्स्पृष्टविवृतादिस्वरूपःप्रयत्नोज्ञातव्यः । साम वर्णानांसंधिर्ज्ञातव्यः । संतानो वर्णानांपरंपरा पदवाक्यादिरूपोवर्णसमुदायइतियावत् ज्ञातव्यः । उपसंहरति ॥ इत्युक्तइति ॥ शीक्षाध्यायः शिक्षणीयानांअर्थानां अध्यायोऽध्ययनमुपदेशः । इत्येवमस्माभिरुक्तःकृतइत्यर्थः । अब्रह्मविद्यात्वपरिहारायवर्णस्वरइत्यादिकंभगवत्परत्वेनापियोज्यं । तथाहि । वरणीयत्वात्वर्णेषुस्थितत्वात्पुंसुवर्णोच्चारणक्रियाप्रदत्वाच्चविष्णोरूपंवर्णइत्युच्यते । तथास्वरमणत्वात्स्वरेस्थितत्वात्स्वरोच्चारणक्रियाप्रदत्वाच्चस्वरइत्युच्यते । मानात्त्राणात् मात्रास्थितत्वात् मात्रोच्चारणक्रियाप्रदत्वाच्चमात्रेत्युच्यते । बलरूपत्वात् बलेविवृतादिरूपेप्रयत्नेस्थितत्वात्बलक्रियाप्रदत्वाच्चबलमित्युच्यते । सर्वरूपेषुसमत्वात् साम्नि वर्णानांसंधौस्थितत्वात् संध्युच्चारणक्रियाप्रदत्वाच्चसामेत्युच्यते । संततत्वात् वर्णपरंपरायांस्थितत्वात् वर्णपरंपरोच्चारणक्रियाप्रदत्वाच्चसंतानइत्युच्यतइत्यर्थोद्रष्टव्यः ॥

उप० ॥ ओंशीक्षांव्यांख्यास्यामः । वर्णस्स्वरः । मात्राबलं । सामसंतानः । इत्युक्तश्शीक्षाध्यायः ॥ २ ॥

॥ २ ॥ (अथभाष्यार्थः ॥ ) अथाधिलोकंपृथिवीपूर्वरूपंद्यौरुत्तररूपमित्यादिप्रकरणपंचकेपृथिव्यादेःपूर्ववर्णत्वंद्यवादेश्चोत्तरवर्णत्वंचप्रतीयते तदयुक्तं लोकादीनांवर्णाद्यभेदस्यबाधितत्वात् पृथिव्यादिदेवतानांपूर्ववर्णादिप्रतिपाद्यत्वाभिप्रायेत्वब्रह्मविद्यात्वापत्तेरतस्तदभिप्रायंप्रमाणेनैवदर्शयन्नादौकिंचिद्वक्तव्यंप्रमेयमाह॥ **नारायणादीति**॥ नारायणादीनिअनिरुद्धावसानानिरूपाणि लोकादिषुपंचसुध्येयानि । तत्रलोकेनारायणः ज्योतिषिवासुदेवः विद्यायांसंकर्षणः प्रजायांप्रद्युम्नः आत्मनिअनिरुद्धइतिविवेकः । एवमुपयुक्तमुक्त्वापृथिवीपूर्वरूपमित्यादेरभिप्रायमाह ॥ **चतुरात्मनेति** ॥ चतुस्स्वरूपेणविद्यमानानि चतुःसंख्याकानीतियावत् । वासुदेवादिकानितान्येव अनिरुद्धांतान्येवरूपाणि पूर्वोत्तरार्णयोः पूर्वार्णेउत्तरार्णेच तथासंहितायाःसंधौसन्निकर्षे संधानेसंधिकार्यभूतसंध्यक्षरव्यवहरणरूपसंधानक्रियायांच संतीतिध्येयानीतिसंबंधः । कृत्स्नशःपूर्वोत्तरार्णयोरित्यादिसंबंधः । समस्तपूर्वोत्तरार्णादावित्यर्थः । कृत्स्नशोयोवेदेत्युत्तरत्रवासंबंधः । यएवमेतामहासंहिताव्याख्यातावेदसंधीयतेप्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसुवर्गेणलोकेनेतिफलवाक्यं स्वर्गशब्दस्यप्रसिद्धस्वर्गपरत्वप्रतीतिंनिवारयन्व्याचष्टे ॥ **योवेदेति** ॥ अन्नाद्येनसंधीयतइत्यस्यार्थः सर्वभोगसमन्वितइति । इहलोकेपीतिशेषः । सुवर्गेणलोकेनसंधीयतइत्यस्यार्थःप्राप्नोतीत्यादि । तथाच सुवरोऽतिशयेनोत्तमोविष्णुःयत्रगतः व्यक्ततयावस्थितः सःसुवर्गो विष्णुव्यक्तिस्थानभूतस्तेनलोकेनवैकुंठादिस्थानेनसंधीयते

भा० ॥ नारायणादिरूपाणिलोकादिपुचपंचसु । अनिरुद्धावसानानिध्येयानिचतुरात्मना । वासुदेवादिकान्येवतानिपूर्वोत्तरार्णयोः । संहितायास्तथासंधौसंधानेचापिकृत्स्नशः ॥ योवेदैतानिरूपाणिसर्वभोगसमन्वितः । प्राप्नोतिवैष्णवंस्थानसुक्तस्स्वर्गाभिधंपरं ॥

तल्लोकंप्राप्नोतीतियावदित्यर्थइत्युक्तोभवति ॥ २-८ ॥ (अथखंडार्थः) ॥ तथाच सहनौयशइत्यादेरयमक्षरार्थः । शन्नोमित्रइत्यादिनाआदौदेवताप्रार्थनेकृतेपिप्रतिविघ्नमभीष्टफलार्थंदेवताप्रार्थनंकर्तव्यमित्याशयेनअथातःसंहितायाइतिवक्ष्यमाणविद्याप्रवृत्त्यर्थंपुनर्मित्रादिदेवान्प्रतिअभीष्टफलंप्रार्थयते ॥ **सहनौयशइति** ॥ सः मित्रादिवाय्वंतोदेवसमुदायो नौ गुरुशिष्ययोर्निर्विघ्नविद्यासमाप्तिसंपादनेन यशोयशस्करोस्तु। सहनौब्रह्मवर्चसं वेदाध्ययनजनितवर्चोविशेषकरश्चभवतु। हेतिमित्रादीनांयशआदिदातृत्वंप्रसिद्धमितिदर्शयतिसामेति। प्रकृतवर्णसंधिनिष्ठब्रह्मविद्यांवक्तुंप्रतिजानतेऋषयः ॥ **अथातइति** ॥ अथवर्णादिशिक्षाव्याख्यानानंतरं अतः संधीयतेप्रजयेत्यादिनावक्ष्यमाणलौकिकालौकिकफलसद्भावात्संहितायाःवर्णसंधिसंबंधिनीमुपनिषदं तत्रत्यरहस्यभगवद्रूपविशेषोपास्तिप्रकारमितियावत्। पंचसुअधिकरणेषुप्रकरणेषुव्याख्यास्यामः सम्यक्कथयामः। अधिकरणनामान्याह ॥ **अधिलोकमित्यादिना** ॥ लोकमधिकृत्यप्रवर्तमानंअधिलोकं तन्नामकंप्रथमप्रकरणं । ज्योतिषांसमूहोज्यौतिषं तदधिकृत्यवर्तमानंअधिज्योतिषं तन्नामकंद्वितीयंप्रकरणं । विद्यामधिकृत्यवर्तमानंअधिविद्यं तन्नामकंतृतीयंप्रकरणं । प्रजाःअधिकृत्यवर्तमानंअधिप्रजं तन्नामकंचतुर्थप्रकरणं। आत्मानंदेहमधिकृत्यवर्तमानंअध्यात्मं तन्नामकंपंचमप्रकरणं । ताःएताःसंहिताःभगवदधिष्ठितत्वेनमहासंहिताइत्याचक्षतेविद्वांसः । अत्रनारायणादीन्यनिरुद्धांतानिभगवद्रूपाणिलोकादिषुपंचसुसंतीतिग्राह्यं ॥ ३ ॥

उप०। सहनौयश० । सहनौब्रह्मवर्चसं । अथातस्सꣳहितायाउपनिषदंव्याख्यास्यामः । पंचस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मं । तामहासꣳहिताइत्याचक्षते ॥ ३ ॥

अथैवंप्रतिज्ञानंतरं अधिलोकं लोकस्थंनारायणमधिकृत्यप्रवर्तमानासंहितानिष्ठाविद्यानिरूप्यतइत्यर्थः । तदेवविवृणोति ॥ पृथिवीत्यादिना ॥ सःनारायणोवासुदेवाद्यात्मनाचतुर्विधः पृथिवी पृथुत्वात्प्रथितत्वाद्वापृथिवीनामकंपृथिवीसंस्थंनारायणस्यवासुदेवनामकंरूपं पूर्वरूपं संहितापूर्ववर्णस्थितं तन्नामकंच। द्यौः प्रकाशस्वरूपत्वात्तन्नामकंद्युस्थंनारायणस्यसंकर्षणनामकंरूपं उत्तररूपं संहितायाउत्तरवर्णस्थितं तन्नामकंच । आकाशः आसमंतात्काशनादाकाशनामकंआकाशसंस्थंनारायणस्यप्रद्युम्ननामकंरूपं संधिः संधिस्थंतच्छब्दवाच्यंच । वायुः ज्ञानादायुष्ट्वाच्चवायुनामकंतत्रस्थंनारायणस्यानिरुद्धनामकंरूपं संधानं संधिकार्यभूतासंध्यक्षरव्यवहरणरूपासंधानक्रिया संधानशब्देनोच्यते। तत्रस्थंतन्नामकंचेत्यर्थः। उपसंहरति ॥ इत्यधिलोकमिति ॥ इत्येवंप्रकारेणलोकांतर्गतचतूरूपनारायणमधिकृत्यविद्यमानासंहितानिरूपितेत्यर्थः । एवमुत्तरत्रापियोजनाद्रष्टव्या ॥ ४ ॥ अथाधिलोकनिरूपणानंतरं अधिज्यौतिषं ज्योतिषांतर्गतवासुदेवमधिकृत्यसंहितानिष्ठाविद्या निरूप्यतइत्यर्थः । एवमेवाथाधिविद्यमित्यादित्रयंयोज्यं। ज्योतिषांतर्गतोवासुदेवोपिवासुदेवाद्यात्मनाचतुर्विधइतिग्राह्यं। अग्निरंगप्रणेतृत्वात्तन्नामा तत्स्थश्चवासुदेवः। आदित्यः आदिकालेभवत्वात्आदानाद्वाआदित्यनामातत्स्थश्चसंकर्षणः । आपः बहुरूपत्वाद्बहुवचनं आपालनात् तन्नामातत्संस्थश्चप्रद्युम्नः। वैद्युतःविद्युत्संबंधित्वात्वैद्युतनामातत्संस्थश्चअनिरुद्धः ॥ ५ ॥ विद्यांतर्गतस्संकर्षणः । सोपिवासु

उप० ॥ अथाधिलोकं । पृथिवीपूर्वरूपं । द्यौरुत्तररूपं । आकाशस्संधिः । वायुस्संधानं । इत्यधिलोकं ॥४॥ अथाधिज्यौतिषं । अग्निःपूर्वरूपं । आदित्यउत्तररूपं । आपस्संधिः । वैद्युतस्संधानं । इत्यधिज्यौतिषं ॥ ५ ॥

देवाद्यात्मनाचतुर्विधः । आचार्यःसदाचारेणप्राप्यत्वादाचार्यनामा आचार्यसंस्थश्चवासुदेवः । अंतेवासी सर्वेषांसमीपेनियामकतयावसतीतिवा अंतेप्रलयेवसतीतिवा अंतेवासिनामातत्संस्थश्चसंकर्षणः । विद्या ज्ञानरूपत्वाद्विद्यानामातत्संस्थश्चप्रद्युम्नः । प्रवचनं प्रकर्षेणवक्तृत्वात्प्रवचननामाप्रवचनक्रियासंस्थश्चानिरुद्धः ॥ ६ ॥ प्रजास्थःप्रद्युम्नःसोपिवासुदेवाद्यात्मनाचतुर्विधः । माता मातृत्वात्मातृनामामातृसंस्थश्चवासुदेवः । पिता पातृत्वात्पितृनामातत्संस्थश्चसंकर्षणः । प्रजा प्रकर्षेणजायतेव्यक्तोभवतीतिप्रजानामकःप्रजासंस्थश्चप्रद्युम्नः । प्रजननं प्रकर्षेणजनयतीतिवा प्रजननक्रियानियामकत्वाद्वाप्रजननशब्दवाच्यः प्रजननक्रियासंस्थश्चानिरुद्धः ॥ ७ ॥ आत्मसंस्थोनिरुद्धः । सोपिवासुदेवाद्यात्मनाचतुर्विधः । अधराहनुः हनुशब्दोज्ञानवाची हनहिंसागत्योः । तथाचाधराणांनीचानांमनुष्योत्तमानांआसम्यक्योग्यतानुसारेणज्ञानप्रदत्वादुत्कृष्टत्वाच्चअधराहनुशब्दवाच्यःतत्स्थश्चवासुदेवः । उत्तराहनुः उत्तरेषांउत्तमानांदेवादीनांसम्यक्ज्ञानप्रदत्वादुत्कृष्टत्वाच्चोत्तराहनुशब्दवाच्यस्तत्स्थश्चसंकर्षणः । वाक् वक्तृत्वाद्वाङ्नामा वाक्संस्थश्चप्रद्युम्नः । जिह्वा ओहाक्त्यागे वागतिगंधनयोः । तथाचांतकालेसर्वान्जहाति योग्यान्मोक्षंगमयतीतिजिह्वानामकः । यथोक्तंबृहद्भाष्ये । जहातिगमयतीतिजिह्वेति । जिह्वासंस्थश्चानिरुद्धः । उपसंहरति

उप ॥ अथाधिविद्यं । आचार्यः पूर्वरूपं । अंतेवास्युत्तररूपं । विद्यासंधिः । प्रवचनꣳसंधानं । इत्यधिविद्यं ॥ ६ ॥ अथाधिप्रजं । मातापूर्वरूपं । पितोत्तररूपं । प्रजासंधिः । प्रजननꣳसंधानं । इत्यधिप्रजं ॥ ७ ॥ अथाध्यात्मं । अधराहनुः पूर्वरूपं । उत्तराहनुरुत्तररूपं । वाक्संधिः । जिह्वासंधानं । इत्यध्यात्मं ॥

॥ इतीति ॥ इत्येवमिमाःमहासंहिताःव्याख्याताइत्यर्थः । महासंहितावेत्तुःफलमाह ॥ यएवमिति ॥ योधिकारी एवंपूर्वोक्तप्रकारेणैताव्याख्याताःमहासंहिताःवेद स सुवर्गेण सुवरःअतिशयेनउत्तमोविष्णुर्यत्रगतोव्यक्ततयावस्थितःसःसुवर्गोविष्णुव्यक्तिस्थानभूतः । तेनलोकेनवैकुंठादिस्थानेनसंधीयतेसंयुक्तोभवति मुक्तोभवतीत्यर्थः । अनंतरंतत्रप्रजया प्रकृष्टत्वेनजननात् नित्योदिततयास्थितत्वात्प्रजेतिज्ञानं तया पशुभिः पांति शंसाधनाश्चेतिपशवोवेदास्तैः । ब्रह्मवर्चसेन ब्रह्मणोविष्णोःवरादेव सम्यक्चापितंप्रापितंप्राप्तंअभिवृद्धंयत्स्वरूपंतेजःतत्ब्रह्मवर्चसं तेन संधीयते । संसृतावल्पतेजोजीवस्वरूपंभगवान्मुक्तौमहत्करोतीति हि अल्पतेजस्तथैवाल्पंजीवरूपंहिसंसृतौ । तदेवसुमहत्तेजःकरोतीशोमहत्तदेतिप्रमाणप्रसिद्धं । अन्नाद्येन तदुपलक्षितसर्वभोगेनचसंधीयतेयुक्तोभवतीत्यर्थः । लौकिकफलेच्छूनांएतत्संहिताज्ञानादानुषंगिकंप्रसिद्धंप्रजादिकमपिफलंयथायोग्यंभवतीतिव्याख्येयं । प्रजयापुत्रसंतत्या पशुभिःगवादिभिः ब्रह्मवर्चसेनवेदाध्ययनजनितमुखगतवर्चोविशेषेण अन्नाद्येनतदुपलक्षितभोगेन सुवर्गेणलोकेन प्रसिद्धस्वर्गलोकेनेत्यर्थोद्रष्टव्यः । यथोक्तमैतरेयभाष्ये अथातःसंहितायाउपनिषदितिखंडे । युक्तःप्रकृष्टज्ञानैश्चवेदैर्विष्णूत्थतेजसा । नित्यायुषाचयुक्तःस्यात्संहितारूपविद्धरेरितिच । प्रकृष्टत्वेनजननात् प्रजेतिज्ञानं पांतिशंसाधनाश्चेतिपशवोवेदाः परब्रह्मणोवरणादेवसम्यक्चापितंस्वरूपंतेजः लौकिकप्रजादिकमपितदिच्छूनांयथायोग्यंभवतीति

उप ॥ इतीमामहासꣳहिताः । यएवमेतामहासꣳहिताव्याख्यातावेद । संधीयतेप्रजयापशुभि । ब्रह्मवर्चसेनान्नाद्येनसुवर्ग्येणलोकेन ॥८॥ तृतीयोनुवाकः ॥ ३ ॥

॥८॥ **अथभाष्यार्थः** ॥ विद्याभ्यासिनःप्रज्ञापरपर्यायमेधादिनाभाव्यं । अतस्तत्प्राप्त्यर्थंविद्याःनिरूप्यंते॥ **यच्छंदसामृषभइ
त्यादिना** ॥ अत्रप्रसिद्धेंद्रस्यैवछंदसामृषभत्वादिविशेषणमुच्यतइत्यन्यथाप्रतीतिनिरासायव्याचष्टे ॥ **योविश्वरूपइति** ॥ वि
श्वंसमस्तंपूर्णंचेतिवचनाद्विश्वरूपःपूर्णरूपः । छंदसामृषभइत्यस्यार्थः छंदसामधिपइति । इदंरातीतिव्युत्पत्त्याभक्ताभिलषितदातृ
त्वार्थकेंद्रशब्दार्थोहरिरिति । भक्ताभिलषितमाहरतीतिहरिरित्यर्थः । अयंचश्रीवेदव्यासएव । तस्यैवविद्याधीशवेदपतिशब्दवा
च्यतायाः विद्याधीशःस्वयंप्रभुः इतिवेदपतिर्जगावितिभगवत्पादैरुक्तत्वात् । अत्रापिछंदसामृषभइत्युक्तत्वात् । तथा वयः
सुपर्णाउपसेदुरिंद्रंप्रियमितिश्रुतिगतेंद्रशब्दस्य[८।३।४] सुपर्णाऋषयोव्यासंनाथमानाययुःसुराइतिएकादशस्कंधतात्पर्येभगवत्पादैर्वेदव्या
सपरत्वेनव्याख्यातत्वेनात्रापिइंद्रशब्दस्यतत्परत्वमेवावगंतव्यमितिसंप्रदायविदः। अमृतादित्येकवचनंबहुवचनार्थे। तेनछंदोभ्य
इत्येतद्विशेषणत्वमेतस्योपपन्नमित्यभिप्रेत्योक्तंअमृतरूपेभ्यइति । अपौरुषेयत्वेननित्येभ्यो वयःसुपर्णा अतीदुशक्रेऔहतइत्या[६।५।७]
दिभ्यइत्यर्थः । यद्वाजरामरणादिविध्वंसनहेतुतयाप्रसिद्धामृतसरूपेभ्यइत्यर्थः । अधिसंबभूवेत्यस्यार्थःसुव्यक्तइति । स्पष्टं
प्रतिपाद्यतयाज्ञातइत्यर्थः । मेधयास्पृणोत्वितिप्रार्थनायास्तात्पर्यमाह । तदुपासनान्मेधावीभूत्वेति । तथाचसइंद्रोमयोपासितः
सन्मोक्षार्थकवेदविद्याभ्यासहेतुभूतयामेधयास्पृणोत्वित्यर्थउक्तोभवति । अमृतस्यदेवधारणोभूयासमित्यस्यतात्पर्यंतत्वविज्ञानी
भूत्वेति। केवलंस्वाध्यायाध्ययनरूपवेदधारणायाः स्थाणुरयंकेवलंभारवाहोयोधीत्यवेदाननधीयतेऽर्थान् शब्दब्रह्मणिनिष्णातोन

भाष्यं । योविश्वरूपोभगवांश्छंदसामधिपोहरि । छंदोभ्योऽमृतरूपेभ्यस्सुव्यक्तस्तदुपासनात् । मेधावीतत्वविज्ञानीभूत्वाक्षिप्रंविमुच्यतइतिच॥

निष्ठीयात्परेयदि । श्रमस्तस्यश्रमफलोह्यधेनुमिवरक्षतः । वित्तंत्वत्तीर्यकृतमंगवाचंहीनामयारक्षतिदुःखदुःखीत्यादिश्रुतिस्मृतिभ्यामनर्थहेतुत्वावगमेनार्थज्ञानपर्यंतत्वादेवमुक्तमितिज्ञातव्यं । यथोक्तं तस्मादेवंसर्ववेदानधीत्यविचार्यचज्ञातुमिच्छेन्मुमुक्षुरिति । तथाचामृतस्यवेदस्यधारणोधारकोभूयासं मोक्षार्थवेदविद्याश्रवणजनितज्ञानवान्भूयासमितियावदित्यर्थउक्तोभवति । ब्रह्मणःकोशोसीतिवाक्यं हेइंद्रत्वंब्रह्मणश्चिन्मात्रस्यकोशोसि निधानमसि आधारोसीतियावत् विशिष्टेविशेषणांशसद्भावादितिपरेणव्याख्यातंतदप्रामाणिकमितिभावेनस्वयंब्रह्मकोशशब्दार्थमाह ॥ **वेदावासत्वतइति** ॥ बृहजातिजीवकमलासनशब्दराशिष्वितिधातोःबृहतेर्मन्प्रत्ययेअमागमेयणादेशेचसतिनिष्पन्नोब्रह्मशब्दोवेदवाची कोशशब्दश्चवासार्थकइतिभावः । तंत्वाभगेत्यादौभगशब्देनतन्नामाआदित्यःप्रार्थ्यतेइत्येतदपव्याख्यानमितिभावेनभगशब्दार्थमाह ॥ **भगष्षड्गुणपूर्णत्वादिति** ॥ ऐश्वर्यस्यसमग्रस्यवीर्यस्ययशसःश्रियः।ज्ञानविज्ञानयोश्चैवषण्णांभगइतीरणेतिवचनात्भगशब्देनषड्गुणाउच्यंते । तैःपूर्णत्वादित्यनेन अर्शआद्यजंततयाभगशब्दोभगवद्वाचकइत्युक्तंभवति । अर्शआद्यजंतत्वमनंगीकृत्यऐश्वर्यादिवाचिभगशब्देनैवविशेषणात्तंत्वाभगेत्यादावितिगीताभाष्योक्तंतुव्याख्यानांतरमित्यविरोधः । हेभग तन्नामकादित्य सहस्रशाखेयथेष्टकिरणेत्वयीत्येतदपव्याख्यानमित्यभिप्रेत्याह ॥ **बहुरूपत्वतइति**॥सहस्रशाखेत्वयिमनसाप्रविष्टइतिशेषइत्यभिप्रेत्यतत्तात्पर्यमाह॥**तमुपास्येति**॥

भाष्यं । वेदावासत्वतोविष्णुर्ब्रह्मकोशइतिस्मृतः । भगष्षड्गुणपूर्णत्वाद्बहुरूपत्वतोविभु । सहस्रशाखइत्युक्तस्तमुपास्यजनार्दनं ।

निमृजइत्यत्रपापमितिशेषइत्यभिप्रेत्यतस्यतात्पर्यमुक्तमुच्यतइति । अनेनप्रतिवेशोसीत्यस्यापितात्पर्यमुक्तंज्ञातव्यं । सर्वभोगैश्चेत्यनेनप्रमाभाहीत्यस्य मेधादिसंपन्नस्याप्यन्नवस्त्राद्यभावेमनःक्षोभेणविद्यानसम्यक्प्रतिष्ठिताभवतीत्यतस्तदर्थंकाचनविद्यानिरूप्यते ॥ **आवहंतीवितन्वानेति** ॥ अत्रस्वाहेतिसंबोध्यश्रियमावहेतिकंप्रतिप्रार्थ्यतइतिनप्रतीयतेइत्यतस्तंदर्शयन्तांविद्यांप्रमाणेन व्याचष्टे ॥ **आवहंतीति** ॥ दात्रीत्यर्थः । धातूनामनेकार्थत्वात् । यद्वावहप्रापणइतिधातोःसम्यक्प्रापयंतीत्यर्थः । चीरमित्यस्यार्थश्चिरमिति । बहुकालमित्यर्थः । वासांसीत्यादेस्तात्पर्यंसर्वभोगानिति । वितन्वानेत्यस्यार्थःसनातनीति । तनुविस्तारे विस्तारश्चकालतइत्यभिप्रेत्येत्थंव्याख्यातं । ततोमेश्रियमावहेत्यत्रमेइतिषष्ठीसप्तम्यर्थइत्यभिप्रेत्यमयीत्युक्तं । लोमशामित्यस्यार्थःसुशिखंडोपशोभितामिति । शिखंडाकपर्दा वेणीचतुष्टयोपशोभितामित्यर्थः । चतुष्कपर्दायुवतिःसुपेशेतिश्रुतेरितिभावः । स्वाहेत्यस्यविशेष्यकथनंगोविंदेति । अनेनस्वाहेत्यनंतरंगोविंदेतिशेषइत्युक्तंभवति । वेदवद्यश्रीवेदव्यासेत्यर्थः ॥ ९–१२ ॥ **ततश्चयश्छंदसामृषभइत्यादेरयमक्षरार्थः** ॥ वेदविद्याभ्यासिनःप्रतिभाप्रज्ञापरपर्यायमेधादिनाभाव्यं । अतस्तत्प्राप्त्यर्थंविद्याःनिरूप्यंते ॥ **यश्छंदसामृषभइत्यादिना** ॥ तत्रादौमेधांप्रार्थयते ॥ **यश्छंदसामिति** ॥ यःछंदसांवेदानांऋषभोऽधिपतिर्विश्वरूपःपूर्णरूपःयश्चामृतात्

---

भाष्यं ॥ मुच्यतेनात्रसंदेहस्सर्वभोगैश्चपू(यु)ज्यतइतिप्रकॢप्ते । आवहंतीचिरंसर्वभोगान्याश्रीस्सनातनी । तांमय्यावहगोविदसुशिखंडोपशोभितामितिच ॥ अनु० ४ ॥ ९—१२ ॥ ॥ ९ ॥

उप ॥ यश्छंदसामृषभोविश्वरूप' ।

एकवचनंबहुवचनार्थे । अमृतेभ्योपौरुषेयत्वेननित्येभ्योजरामरणादिविध्वंसनहेतुतयाप्रसिद्धामृतसमानेभ्योवा छंदोभ्यो वयःसुपर्णाइत्यादिवेदवाक्येभ्योऽधिसंबभूव सुव्यक्ततयाप्रतिपाद्यः तदुक्तप्रकारेणोपास्त्याप्रकटोबभूवेतिवा । सइंद्रोभक्ताभिलषितदाता वेदव्यासरूपोहरिर्मयोपासितःसन् मा मां मेधया मोक्षार्थकवेदविद्याभ्यासहेतुभूतयाप्रज्ञयास्पृणोतुबलयतु । प्रज्ञाबलयुक्तंकरोतु । हेदेव वेदव्यास एवंमेधासंपत्त्यनंतरंअहंत्वत्प्रसादादमृतस्यवेदस्यधारणोधारकोभूयासं मोक्षार्थवेदविद्याश्रवणजनिततत्वज्ञानवान्भूयासमितियावदित्यर्थः । पुनःप्रार्थनीयांतरमाह ॥ **शरीरमिति** ॥ हेदेव मेशरीरं विचर्षणं प्रजाश्चर्षणयस्स्मृताइतिवचनात्बहुशिष्याख्यप्रजोपेतं तत्सेव्यमितियावत् । भवतु । सर्वेंद्रियाणांभगवत्परत्वंप्रार्थयते ॥ **जिह्वामेइत्यादिना** ॥ हेदेव मे ममजिह्वा मधुमत्तमा मदधिर्मध्वितिप्रोक्तोमदःसुखमिहोच्यतेइतिछांदोग्योपनिषद्भाष्योक्तेर्मदोधीयतेअस्मिन्निितिमधुब्रह्म । अतिशयेनतद्वती । तत्प्रतिपादिकाभवतु । कर्णाभ्यां भूरिपूर्णंब्रह्म विश्रुवं विशेषेणशृणवानि । इदमुपलक्षणं । चक्षुषात्वद्रूपाणिपश्यामीत्यादिद्रष्टव्यं । ममवेदतद्विषयमेधयोरभावात्तदुद्देशेनमांप्रतित्वदीयंतदुभयप्रार्थनंव्यर्थमित्यतआह ॥ **ब्रह्मणःकोशोसीति** ॥ हेदेवत्वं ब्रह्मणोवेदस्य कोशआवासोनिधिरसि मेधयापिहितः आच्छादितोसि पूर्णोसीतियावत् । पुनःप्रार्थनीयांतरमाह ॥ **श्रुतमिति** ॥ हेदेव मेमया श्रुतं दिव्यवेदार्थं गोपाय गोपय । अयोग्यंप्रत्युपदेशविषयेबुद्धिमदत्वारक्षस्वे

उप ॥ छंदोभ्योध्यमृतात्संबभूव । समेंद्रोमेधयास्पृणोतु । अमृतस्यदेवधारणोभूयासं । शरीरंमेविचर्षणं । जिह्वामेमधुमत्तमा । कर्णाभ्याभूरिविश्रुवं । ब्रह्मण.कोशोसिमेधयापिहितः ।

त्यर्थः । गुपूरक्षणइतिधातोः । यद्वामदीयंश्रुतमर्थंगोपाय अविस्मृतंकुरु । श्रुतंमेमाप्रहासीरितिशाखांतरोक्तेरयमर्थः ॥ ९ ॥ मेधादिसंपन्नस्याप्यन्नवस्त्राद्यभावेसतिमनःक्षोभेणविद्यानसम्यक्प्रतिष्ठिताभवत्यतस्तदर्थंकांचनविद्यामाह ॥ आवहंतीति । हेस्वाहा स्वीयंस्वीकुरुतेयस्मात्स्वाहेत्युक्तोजनार्दनइतिवचनात् स्वीयमेवहविरादिकंभ्रांत्याजीवानांस्ववत्प्रतीतंस्वीकुरुतइतिस्वाहः सचासावश्चेतिस्वाहेतिसंबुद्धिः गोविंदेतिशेषः । वेदवेद्य श्रीवेदव्यास या वितन्वाना सनातनी आत्मनोजीवजातस्य चीरंचिरंबहुकालं अन्नवस्त्रादिरूपसर्वभोगान्आवहंतीदात्री । यद्वा आत्मनोजीवसमूहानन्नादिसर्वभोगान्आवहंतीप्रापयंती । अजांग्राममनयदितिवत्द्विकर्मताच इदानीमितिशेषः । ममपशुभिःअश्वादिभिःसह वासांसि गावोगाः अन्नपानेचकुर्वाणावर्तते यतअतःतांलोमशांसुशिखंडोपशोभितांश्रियंलक्ष्मींमेमयिसर्वदाआवहस्थापय उत्तरत्रापिनिश्चलांकुर्वित्यर्थः ॥१०॥ अभ्यस्ताच विद्याशिष्येभ्योव्याख्यातैवज्ञानाधिक्यसंपादकतयासंपूर्णाभवतिनान्यथा । आचार्यात्पादमादत्तेपादंशिष्यस्वबुद्धितः । पादं सब्रह्मचारिभ्यःपादंव्याख्यानकौशलादितिवचनात् । अतस्तदर्थंशिष्यसंपत्तिंप्रार्थयते ॥ आमायंत्विति ॥ हेस्वाहा मामांप्रति ब्रह्मचारिणःशिष्याः आयंतुआयांतु विविधाः विविधगोत्रोत्पन्नाः प्र प्रकृष्टाः ज्ञानप्रकर्षवंतः दमाःइंद्रियनिग्रहवंतः शमाः भगवन्निष्ठबुद्धयः व्याख्यातृयशःश्रुत्वैवहिदिग्भ्यःशिष्याःसमायांतिनान्यथा । अतस्तदर्थंयशःप्रार्थयते ॥

उप ॥ श्रुतंमेगोपाय ॥ ९ ॥ आवहंतीवितन्वाना । कुर्वाणाचीरमात्मनः । वासांꣳसिममगावश्च । अन्नपानेचसर्वदा । ततोमेश्रियमावह । लोमशांपशुभिस्सहस्वाहा ॥ १० ॥ आमायंतुब्रह्मचारिणस्स्वाहा । विमायंतुब्रह्मचारिणस्स्वाहा । प्रमायंतुब्रह्मचारिणस्स्वाहा । दमायंतुब्रह्मचारिणस्स्वाहा । शमायंतुब्रह्मचारिणस्स्वाहा । ॥ १० ॥

यशइति ॥ जने व्याख्यातृजनमध्ये शिष्यागमनार्थं यशोयशस्वी असानिभवानि । वस्यसइत्येतत्सकारांतंसुखवाचि । तथाचवस्यसइतिपंचमीसप्तम्यर्थे । शिष्यागमनजनितसुखनिमित्ताद्धाइतरव्याख्यात्रपेक्षयाश्रेयान्श्रेष्ठअसानि । हेभग षड्गुणपूर्ण स्वाहा तंत्वा त्वां मनसाप्रविशानि सदात्वांउपासीनोभवानि । हेभगस्वाहा सत्वंमामांप्रविश मदुपास्तिविषयोभव । किंततइत्यतआह ॥ तस्मिन्निति ॥ हेभगस्वाहा सहस्रशाखेबहुरूपेतस्मिंस्त्वयि मनसाप्रविष्टोहं त्वामुपासीनइतियावत् । अपरोक्षज्ञानद्वारापापमप्रारब्धं निमृजेप्रक्षालये ॥ ११ ॥ शिष्याश्चअयत्नेनैवआयांत्वितिसदृष्टांतंप्रार्थयते ॥ यथापइति ॥ यथाआपः उन्नतप्रदेशेवृष्टाः अनायासेनप्रवताःनिम्नभूमीः प्रवतास्यान्निम्नभूमिरितिवचनात् । निम्नप्रदेशानितियावत् । उद्दिश्ययंतिगच्छंति आयांतीतियावत् । यथाचाहर्जरं अहानिजीर्णानिगतानीतियावत् । यत्रभवंतिसोहर्जरःसंवत्सरः तं प्रतिमासाःयथाप्रपतंति तदंतर्गताभवंतीतियावत् । एवमेवहेस्वाहा धातःसर्वजगद्धारकदेव मांप्रतिब्रह्मचारिणःसर्वतोदिग्भ्यःआयंतुआयांतु आगत्यचमदाज्ञायांयंतुतिष्ठंतु । मदाज्ञानुवर्तिनोभवंत्वितियावदित्यर्थः । मोक्षंप्रार्थयते ॥ प्रतिवेशोसीति ॥ हेधातस्त्वंआदौमामांप्रपद्यस्व पद्गतौ णिजंतंप्रकर्षेणगमय त्वत्समीपंप्रापय । पश्चात्त्वंप्रतिवेशो मुक्तौमयाप्रवेष्टुंयोग्योसि । ममत्वत्प्रवेशंदेहीतियावत् । अनंतरंमामांप्रप्रकर्षेण भाहि भादीप्तौणिच् । दीपयप्रकाशय । आनंदादिस

उप ॥ यशोजनेसानिस्वाहा । श्रेयान्वस्यसोसानिस्वाहा । तंत्वाभगप्रविशानिस्वाहा । समाभगप्रविशस्वाहा । तस्मिन्त्सहस्रशाखे । निभगाहंत्वयिमृजेस्वाहा ॥ ११ ॥ यथापःप्रवतायंति । यथामासाअहर्जरं । एवंमांब्रह्मचारिणः । धातरायंतुसर्वतस्वाहा ।

र्वभोगदानेनमत्स्वरूपाविष्करणंकुर्वितियावदित्यर्थः । ( प्रपद्यस्व प्राप्नुहिच । ) तस्यैषआत्माविवृणुतेतनूंस्वामितिश्रुतेरिति भावः ॥ १२ ॥ (अथभाष्यार्थः) पूर्ववेदविद्याभ्यासिनोमेधादिप्राप्त्यर्थविद्यानिरूपिताः । इदानीव्याहृतिनिष्ठांविद्यामाह । **भूर्भुवःसुवरितिवेत्यादिना** ॥ अस्या विद्यायाःब्रह्मपरत्वाप्रतीतेस्तांप्रमाणेनैवसम्यक्व्याचष्टे ॥ **भूरादिव्याहृतीभिस्त्वि त्यादिना** ॥ तत्रभूर्भुवस्सुवरित्यादेस्तात्पर्यं भूरादीति । महइत्यंताभिरित्यर्थः । सआत्माअंगान्यन्यादेवताइत्यस्यार्थमाह ॥ **देहमध्यगइत्यादिना** ॥ महोनामावासुदेवोदेहमध्यगः मूलरूपस्यहरेः देहमध्यगइत्यादिनाचआत्मशब्दोगित्वार्थकोमध्यदेह परइत्युक्तंभवति । तस्यमहात्मनोवासुदेवस्येत्येतदनिरुद्धःशिरोमतइत्यादावपिसंबध्यते । नन्वनिरुद्धादिमूर्तीनांपरस्परमत्यं ताभिन्नत्वात्अन्यादेवताइतिकथमन्यत्वोक्तिः । तथाहीनोच्चभावशून्यत्वात्सआत्मा अंगानीत्यंगागिभावोक्तिश्चेत्यतआह ॥ **अनन्योपीति** ॥ भेदशून्योपीत्यर्थः । चतुरात्माभगवाननन्योपिश्रुतौअन्यशब्देनप्रकीर्त्यते । तथानिर्विशेषोपिहीनोच्चभाव रूपविशेषशून्योपिभगवान् सआत्माअंगानीतिचप्रकीर्त्यतेइत्यध्याहारेणयोज्यं । ननुभेदाभावेकथमन्यत्वोक्तिरित्यतआह ॥ सं

---

उप ॥ प्रतिवेशोसिप्रमाभाहिप्रमापद्यस्व ॥ १२ ॥

भाष्य ॥ भूरादिव्याहृतीभिस्तुवाच्यमूर्तिचतुष्टय । अनिरुद्धादिकवासुदेवातदेहमध्यग । वासुदेवोमहोनामात्वनिरुद्धश्शिरोमत । भूर्नामाथभुवोनामाबाहूप्रद्युम्नईरित । सकर्षणस्सुवर्नामापादौतस्यमहात्मन । अनन्योप्यन्यशब्देनचतुरात्माप्रकीर्त्यते । निर्विशेषोपिभगवान्स ख्यामात्रविशेषत । ॥ ११ ॥

ख्येति ॥ भेदाभावेपिविशेषबलेनकेवलंद्वित्वादिसंख्याविशेषयुक्तत्वादन्यत्वोक्तिर्युक्तेत्यर्थः । यथोक्तमनुव्याख्याने । अभेदेपिविशेषेणैवान्यइत्युदितोहरिरिति । भगवानितिवचनेन ऐश्वर्यादंगांगिभावोक्तिरपियुक्तेतिसूचितमित्यपिद्रष्टव्यं । यथोक्तं भाष्ये । अंगांगित्वेनभगवान्क्रीडतेपुरुषोत्तमः । ऐश्वर्यान्नविरोधश्चचिंत्यस्तस्मिन्जनार्दनेइति । भूरादिव्याहृतिवाच्यानांअनिरुद्धादिमूर्तीनांउपास्त्यर्थमधिष्ठानान्याह ॥ भूरितिवाअयंलोकइत्यादिना ॥ तत्रभूरादिशब्दवाच्यभगवन्मूर्तीनांलोकाद्यभेदउच्यतेइत्यन्यथाप्रतीतिनिरासायतदभिप्रायमाह॥ लोकेति ॥ लोकशब्देनभूम्यंतरिक्षासौलोकानांग्रहणं। महइत्यादित्यइत्युक्तादित्यस्यापिलोकप्रकाशकत्वाल्लोकशब्देनग्रहणमितिमंतव्यं। ज्योतिःशब्देनाग्निवाय्वादित्यचंद्रमसांग्रहणं । प्राणवेदेत्यत्रक्रमोनविवक्षितः । प्राणेत्यनेन प्राणापानव्यानानांसंग्रहः । तदाप्यायकत्वादन्यस्यापिप्राणशब्देनैवग्रहणं। वेदशब्देन ऋक्सामयजुषांब्रह्मेत्युक्तवेदसमुदायस्यचग्रहणं । तथाचानिरुद्धादिरूपोभगवान्लोकादिषुतिष्ठतीतिश्रुत्यर्थोद्रष्टव्यः। सप्तसुप्रथमेतिसूत्रादितिभावः। तावाएताश्चतस्रश्चतुर्धेत्यस्यार्थःप्रत्येकशइति । आदित्येनवावसर्वेलोकामहीयंते चंद्रमसावावसर्वाणिज्योतींषिमहीयंते । ब्रह्मणावावसर्वेवेदामहीयंते । अन्नेनवावसर्वेप्राणामहीयंते । इतिवाक्यचतुष्टयाभिप्रायमाह ॥ महीयतइति ॥ पूज्यतइत्यर्थः। महपूजायामितिधातोः । महतिपूजयति । अत्रपूज्यपूजकभावोक्त्याभेदःप्रतीयते । अतआह ॥ पूज्येति ॥ अत्र

---

भाष्यं ॥ लोकज्योति.प्राणवेदेष्वेकस्सपुरुषोत्तम । प्रत्येकशश्चातुरात्म्यात्षोडशात्माप्रकीर्तित । महीयतेमहतिचस्वयंसभगवान्हरिः पूज्यपूजकभेदोत्रनैवकश्चिदपीष्यते ॥

भगवद्रूपसमुदाये।अपिशब्दोयद्यपितथापीत्यर्थे। तथाचयद्यपिअत्रभगवद्रूपसमुदाये पूज्यपूजकसमुदाये पूज्यपूजकभेदोनैवेष्यते तथापिक्रीडयैवपूज्यपूजकभावइत्यभिप्रायः । यथोक्तं सोर्चन्नचरदित्यत्रबृहद्भाष्ये । सोत्मानमर्चन्नचरत्क्रीडयातत्तदात्मकमित्यादि। एवंभूरितिवाअयंलोकइत्यादावयंलोकइत्यादिकंसप्तम्यंतमित्यंगीकृत्यव्याख्यातं । इदानीतत्प्रथमांतमंगीकृत्यापिव्याख्याति ॥ नामेति ॥ हेतुत्त्वात्हेतुमत्त्वात् लोकादिकंलोकइत्यादिकं। तथाचायंलोकइत्यादिनाम्नाप्रवृत्तिहेतुभूताःयेधर्मास्तद्वत्त्वात् भूरादिशब्दवाच्यस्यहरे र्लोकादिकं अयंलोकइत्यादिशब्दजातं नाम अतोऽयंलोकइतिसामानाधिकरण्यंयुक्तमित्यर्थः । अयं लोकइत्यादिनामप्रवृत्तिहेतुभूतधर्मवत्त्वमेवदर्शयति ॥ अयमित्यादिना ॥ तुशब्दश्चशब्दार्थः । तेनोत्तरत्रचलोकःप्रकाशरूपत्वादितिलोकशब्दव्याख्यानसंग्रहः । अतोनन्यूनतेतिज्ञातव्य । असुशब्दस्यसप्तमीअसाविति तस्यार्थः प्राणेस्थितत्वतइति । तथा चप्राणेस्थितत्वादसुशब्दवाच्यइत्यर्थः । ईक्षणादित्यतःपूर्वंअंतरितिशेषः । अंतस्थित्वाईक्षणयोगतः । अभावाद्व्यवधानस्यह्यंतरीक्षमितीर्यतइति ॥ अदितेःसुतइति ॥ वामनरूपेणेतिभावः । चाथशब्दावन्योन्यसमुच्चये ॥ वयतीति ॥ वयश्रेष्ठत्वइतिधातोः । यद्यस्माज्जगत्प्रतिवयतिश्रेष्ठोभवतितस्मात्वायुरित्यर्थः यद्वावयबंधनइतिधातोः यद्यस्माज्जगद्वयतिविधिनिषेधाभ्यांबध्नाति तस्माद्वायुरित्यर्थः। आह्लादरूपत्वात्सुखरूपत्वादित्यर्थः। चदिआह्लादनइतिधातोः । अर्च्यत्वात्पूज्यत्वात् । याज्यस्वरूपत्वात्

भाष्य ॥ नामप्रवृत्तिहेतुत्वान्नामलोकादिकहरे । अयसमीपस्थतयात्वसौप्राणेस्थितत्वत । ईक्षणादतरिक्षचाथादित्यस्थोऽदितेस्सुत । अग्निरमौ स्थितत्वाच्चवायुर्वयतियज्जगत् ॥ चद्रआह्लादरूपत्वादृगर्च्यत्वाज्जनार्दन । यजुर्याज्यस्वरूपत्वात्सामचासौसमत्वत ।

पूज्यस्वरूपत्वात्। समत्वतः सर्वरूपेष्वितिशेषः । महइतिब्रह्मेत्यनेनकिमधिष्ठानमुक्तमितिनप्रतीयतेअतआह ॥ **वेदानामिति** ॥ तन्निर्वक्तिबृहत्त्वादिति ॥ तथाचाखिलवेदानांसमुदायेप्रतिपाद्यतयावस्थितोभगवान्बृहत्त्वात्पूर्णत्वाद्ब्रह्मेत्युच्यतइत्यर्थः।ननुतर्हि ब्रह्मशब्दस्यबृहजातिजीवकमलासनशब्दराशिष्वितिवेदरूपशब्दराशिषुप्रसिद्धिविरोधइत्यतआह॥ **तत्संबंधादिति**॥ स्वप्रतिपाद्यतयावस्थितब्रह्मशब्दवाच्यभगवत्संबंधादित्यर्थः॥ **प्रकृष्टनयनादिति** ॥ प्रकृष्टंप्रकर्षेणऊर्ध्वलोकंप्रतिदेवाना मा सम्यगित्यपिग्राह्यं नयनादित्यर्थः । अपेत्यस्यार्थोऽवागिति । अवाक् अधो दैत्यानां असम्यगित्यपिग्राह्यं । नयनात्हरिरपानइत्यर्थः । वीत्यस्यार्थोविविधमिति । विविधंयथास्यात्तथा अनेकप्रकारेण सत्ताप्रतीतिप्रवृत्तिदानेनेतियावत् । आसम्यगित्यपिग्राह्यं । नयनात्प्रेरणादित्यर्थः।सर्वोपजीव्यतः अद्यतेतिचभूतानितस्मादन्नंतदुच्यतइतिश्रुतेरद्यत्वमेवान्नत्वं। अद्यत्वंचनचर्व्यत्वं किंतूपजीव्यत्वमेवेतिभावेनैतदुक्तं । यथोक्तंभाष्ये । उपजीव्यत्वमेवाद्यत्वमिति । तावाएताइतिवाक्यंप्रत्येकशइति पूर्वंव्याख्यातं । इदानींतदुपसंहारपरमितिसूचयन्नुपसंहरति ॥ **एवमिति** ॥ अनिरुद्धादिरूपेणषोडशात्माषोडशरूपीसन्व्यवस्थितइत्यर्थः । अनेनपूर्वंप्रत्येकशइतिपदद्वयाध्याहारउक्तोभवति । तथाचतावाएताइतिवाक्यं तावाएताश्चतस्रः अनिरुद्धादिमूर्तयः एवं भूरितिवाअयंलोकइतिप्रकारेण प्रत्येकशश्चतुर्धा। तथाचभगवन्मूर्तयःषोडशसंख्याकाःसंभवंतीतिव्याख्यातंभवतीति

भाष्यं ॥ बृहत्त्वाद्ब्रह्मवेदानांसमुदायेखिलेस्थितः । तत्संबंधाद्वेदराशिर्ब्रह्मशब्देनकीर्तितः । प्रकृष्टनयनात्प्राणोऽपानोऽवाङ्नयनाद्धरिः । विविधंनयनाद्व्यानस्सोन्नंसर्वोपजीव्यतः । एवंषोडशरूपोसौचतुरात्माव्यवस्थितः ।

ज्ञातव्यं । **तायोवेद सवेदब्रह्म** सर्वेस्मैदेवाबलिमावहंतीत्यत्रव्याहृतिवेत्तुःसर्वदेवतापूज्यत्वरूपंफलमुक्तं सत्सर्वेतद्वेत्तृसाधारणमितिप्रतीयते तदयुक्तं माहाचमस्यःप्रवेदयते इत्युपक्रमविरोधादितिभावेन महाचमसशब्दार्थकथनपूर्वकं माहाचमस्यशब्दार्थमाह ॥ **महाचमसनामासाविति** ॥ असौभगवान्अतिचमत्कृतिःअतिशीघ्रंकर्ता । येत्यस्यार्थमाह ॥ **तज्ज्ञानीति** ॥ यातेर्गत्यर्थत्वात् तज्ज्ञानस्यसर्वसाधारण्यात्समित्युक्तं। तथाचसंसम्यक्तज्ज्ञानीतिसंबंधः।सपरिकीर्तितइत्यपिक्वचित्पाठः । तथाचमहाचमसंभगवंतंसमग्यातिजानातीतिमाहाचमस्योब्रह्मेत्युक्तंभवति। सवेदब्रह्मेत्येतत्सावधारणमित्यभिप्रेत्यव्याचष्टे ॥**सएवेति**॥ ब्रह्मवित् षोडशात्मपरब्रह्मज्ञानी । सर्वेस्मैदेवाबलिमावहंतीत्यस्यार्थमाह ॥ **तस्मादिति** ॥ अनेनसर्वेस्माइत्यतःपूर्वंतस्मादितिशेषइत्युक्तंभवति॥ **मुक्तिगोपीति** ॥ नकेवलंसंसारगइत्यर्थः । अनेनबलिमावहंतीतिसंसारेमुक्तौचेतिशेषःकार्यइतिसूचितंभवति । सर्वेदेवाबलिमावहंतीत्यस्यतात्पर्यतोव्याख्यानं सर्वदेवैरतितरांपूज्यतइति । आङोर्थोऽतितरामिति । पूज्यतइत्युक्त्या बलिंपूजांवहंति वहप्रापणइतिधातोःप्रापयंतिकुर्वंतीतियावत् । तस्मादित्युक्तंहेतुंव्यनक्ति ॥ **यस्सम्यगिति** ॥ सआत्मा । अंगान्यन्यादेवताइतिभूरादिशब्दवाच्यानिरुद्धादिमूर्तित्रयाणांमहःशब्दवाच्यवासुदेवांगत्वमुक्तं । तत्रबृहदारण्यकवाक्यंप्रमाण

---

भाष्यं ॥ महाचमसनामासौयस्मादतिचमत्कृति । माहाचमस्यस्तज्ज्ञानीब्रह्मासंपरिकीर्तितः । एवंषोडशरूपाणांज्ञानयोग्यश्चतुर्मुख । सएव ब्रह्मवित्तस्मात्पूज्यतेमुक्तिगोपिसन् । सर्वदेवैरतितरांयस्सम्यक्षोडशात्मविदितिव्याहृतितत्वे ॥

यति ॥ **तस्यभूरितिशिरइति** ॥ यएषएतस्मिन्मंडलेपुरुषइतिपूर्ववाक्यमप्यत्रग्राह्यं । इत्यादीत्यादिपदेनयोयंदक्षिणेऽक्षन् पुरुषःतस्यभूरितिशिरइत्युत्तरखंडस्थवाक्यग्रहणं । तथाचयोयंएतस्मिन्सूर्यमंडलेदक्षिणेऽक्षन्अक्षणिचपुरुषोवासुदेवस्तस्यभूर्नामानिरुद्धःशिरइत्यर्थः । भूरित्यस्यशिरस्त्वेयुक्तिमाह ॥ **एकंशिरइत्यादि** ॥ शिरएकं एतदक्षरं भूरित्येतदक्षरमप्येकं अतःतद्वाच्योनिरुद्धःशिरइत्यर्थः । एवमुत्तरत्रापियोज्यं । प्रतितिष्ठतिआभ्यामितिप्रतिष्ठेपादौ । यथोक्तंबृहद्भाष्ये । सवासुदेवोभगवानादित्यस्थोजनार्दनः । सएवदक्षिणाक्षिस्थश्चेत्यादि । ननुचतस्रश्चतस्रोव्याहृतयः तायोवेदेत्येत देवंषोडशरूपाणांज्ञानयोग्यश्चतुर्मुखइतिप्रमाणेनसर्वव्याहृतिवेत्ताब्रह्मेतिव्याख्यातं । तदयुक्तं तासामुहस्मैतांचतुर्थीं माहाचमस्यःप्रवेदयते इत्युपक्रमेतासांतिसृणांव्याहृतीनांमहइत्येतांव्याहृतिंमाहाचमस्योब्रह्माचतुर्थींचतुर्थीत्वेनवेदयतेजानातीति ब्रह्मणोविशिष्यचतुर्थव्याहृतिज्ञानवत्त्वोक्तिविरोधादित्यतः तासामुहस्मैतांचतुर्थीमितिवाक्यंअध्याहारपूर्वकंसम्यग्व्याचष्टे ॥ **सर्वव्याहृतीनामिति** ॥ भूरादिचतसृणां व्याहृतीनांप्रवेत्तापीत्यध्याहारकरणादुक्तशंकानिरासइतिज्ञेयं रुद्रादीनामपिव्याहृतिवेत्तृत्वात्प्रेत्युपसर्गः । चतुर्थीमित्यस्यार्थश्चतुर्थीत्वेनेति । एतां महइतिव्याहृतिं विशेषोविशिष्यवचनं युक्तइतिशेषः । अनिरुद्धादिचतसृषुमूर्तिषुभूरादिशब्दचतुष्टयप्रवृत्तौनिमि

---

भाष्यं ॥ तस्यभूरितिशिरः । एकंशिरः । एकमेतदक्षरं । भुवइतिबाहू । द्वौबाहू । द्वेएतेअक्षरे । सुवरितिप्रतिष्ठे । द्वेप्रतिष्ठे । द्वेएतेअक्षरे । इत्यादिश्रुतेः । सर्वव्याहृतीनांप्रवेत्तामाहाचमस्यश्चतुर्थीत्वेनैतांप्रवेदयतइतिविशेषः ।

त्तंदर्शयति॥ **भूर्नामेति** ॥ स्फूर्तिरूपत्वात्स्वप्रकाशस्वरूपत्वादित्यर्थः। भूशब्दःपूर्णार्थकभूरिवाची। वशब्दःपराक्रमापरपर्यायवीर्यवाचीत्यभिप्रायेणभूरिवीर्यत्वतइत्युक्तं । वशब्दःशरीरबलवाचीत्यभिप्रेत्यसुबलरूपत्वादित्युक्तं । तद्ब्रह्मेत्यत्राव्यवधानेनप्रकृतस्यमहोनामकव्याहृतिप्रतिपाद्यस्यवासुदेवस्यैवगुणपूर्णत्वमुच्यतइत्यन्यथाप्रतीतिनिरासायतद्वाक्यंव्याचष्टे ॥ **तदेतदिति** ॥ चतुराकारं भूरादिशब्दचतुष्टयेनाक्रियमाणं तदेतदनिरुद्धादिमूर्तिचतुष्टयमपि गुणबृंहणाद्धेतोर्ब्रह्मेत्युक्तमित्यर्थः। तदेतत्चतुराकारमितिश्रौततच्छब्दार्थइत्यवधेयं । तथाचायंतच्छब्दःपूर्वप्रकृतमूर्तिचतुष्टयपरामर्शकएव नाव्यवहितवासुदेवमात्रपरामर्शकइतिभावः । सआत्मा अंगान्यन्यादेवताइतिवाक्यंप्रकारांतरेणप्रमाणेनव्याचष्टे ॥ **सआत्मेति** ॥ सइत्यनूद्यचतुरात्माजनार्दनइतिव्याख्यानं । सर्वदेवानामात्मास्वामीत्यर्थः । अंगमितिसमुदायापेक्षमेकवचनं । तस्यार्थमाह ॥ **आगंतुकत्वतइति** ॥ भगवताजातत्वादितिभावः । तथाचांगानि अप्रधानानि परिवारतयासेवकाइतियावदित्यर्थउक्तोभवति । तावाएताश्चतस्रइतिवाक्यं एवंषोडशरूपोसावितिप्रमाणेनव्याख्यातं। तत्रैवप्रमाणांतरमाह ॥ **वासुदेवादीति** ॥ वासुदेवादिरूपोसौजनार्दनोयतः चतुश्चतुः चतुर्गुणितचतुःसंख्ययायुक्तोऽतःषोडशात्मेत्यर्थः । महइतिब्रह्मेत्यस्यार्थः सएवेति । वासुदेवरूपीजनार्दनएवेत्यर्थः । सर्ववेदोक्तइत्यनेन पूर्वोदाहृतप्रमाणे वेदानांसमुदायेऽखिलेस्थितइत्येतत्प्रतिपाद्यतयास्थितइतिव्याख्येयमितिसूचितंभवतीतिज्ञा

भाष्यं ॥ भूर्नामास्फूर्तिरूपत्वाद्भूरिवीर्यत्वतोभुवः। सुवस्सुबलरूपत्वान्महःपूर्णत्वतोविभु । तदेतचतुराकारंब्रह्मोक्तंगुणबृंहणात् ॥ सआत्मासर्वदेवानांचतुरात्माजनार्दनः । तस्यब्रह्मादयोदेवाअंगमागंतुकत्वत. । वासुदेवादिरूपोसौषोडशात्माचतुश्चतु ।

तव्यं । ननुसएवसर्ववेदोक्तइतिकथं ब्रह्मादीनामपितत्तद्विद्योक्तत्वादित्यतआह ॥ **सर्वविद्यास्विति** ॥ सर्वविद्यासुचसर्ववि द्यास्वपि अयमेवेश्वरोमुख्यप्रतिपाद्यइत्यर्थः । ब्रह्मादीनांचामुख्यप्रतिपाद्यत्वाद्युक्तमवधारणमितिभावः । यद्वासर्वविद्या सुचोक्तइतिबुद्ध्याविवेकेनयोज्यं । तथाच सएवेश्वरः सर्ववेदोक्तोयतोऽतस्तदंतर्गतासुसर्वविद्यासुचोक्तः प्रतिपाद्यइत्यर्थः । ननुसर्वस्यापिवेदस्येश्वरविषयताकुतइतिचेत् तद्याख्येयप्रणववाच्यत्वादितिवदामः । तथाहि । ॐकारस्तावत्भगवतःईश्वरस्य वाचकः ॐमितिब्रह्मेतिश्रुतेः किमेतावता । नहिप्रणवएववेदइतिचेत् प्रणवार्थतयातावत्परमेश्वरस्यव्याहृत्यर्थतावगम्यते । कुतइत्यतआह ॥ **प्रणवार्थोव्याहृतयइति** ॥ तिस्रोव्याहृतयोवर्णत्रयात्मकोंकारार्थप्रतिपादिकास्तद्व्याख्यानरूपाइतियावत् । तथाचव्याख्यानव्याख्येययोश्चैकविषयतासुप्रसिद्धेति । अनेनव्याहृतीनामग्निवायुसूर्यदेवताकत्वप्रसिद्ध्यातत्प्रतिपादकत्वभ्रां तिरप्यपास्ता । अग्न्यादीनामभिमानिदेवतात्वेनापिप्रसिद्ध्युपपत्तेः । अन्यथाभगवत्परप्रणवव्याख्यानरूपतानुपपत्तिप्रसं गइतिभावः । किमतो नहिव्याहृतयएववेदइतिचेन्न । व्याहृत्यर्थतयापरमेश्वरस्यगायत्रीप्रतिपाद्यतावगम्यते । त्रिपदा यागायत्र्याव्याहृतित्रयव्याख्यानरूपत्वस्यागमसिद्धत्वादित्याशयेनाह ॥ **व्याहृत्यर्थेति** ॥ अत्रव्याहृत्यर्थेतिपदंछेद्यं । गायत्रीतिशेषः । अनुगायत्र्यांयोभर्गोनोऽस्माकंधियःप्रचोदयात्प्रेरयेत्तस्यसवितुर्देवस्यतत् वरेण्यरूपंधीमहीति भर्गनामकः सविताप्रतिपाद्योदृश्यतेतत्कथंभगवत्परत्वमितिचेन्न । भरणगमनयोगेनजगत्प्रसवहेतुत्वेनचभगवानेवभर्गसवितृशब्दयोरर्थो

---

भाष्यं ॥ सएवसर्ववेदोक्तस्सर्वविद्यासुचेश्वरः । प्रणवार्थोव्याहृतयोव्याहृत्यर्थोत्रृगादयः ।

नसूर्यः । तथात्वेगायत्र्याःभगवत्परव्याहृत्यर्थतानुपपत्तेः । ध्येयःसदासवितृमंडलमध्यवर्तीनारायणःइत्याद्यागमविरुद्धत्वा च्चेतिभावः । अस्तुगायत्र्यर्थोनारायणःकिमेतावतापि । नहिगायत्र्येनवेद इति चेन्न । गायत्र्यर्थत्वात्पुरुषसूक्तार्थोपिस एवेतिसिध्यति । वर्गत्रयात्मकस्यतस्यत्रिपदगायत्रीव्याख्यानरूपताया स्तद्भेदःपौरुषंसूक्तमित्याद्यागमसिद्धत्वादित्याशये नाह ॥ **व्याहृत्यर्थाइति** ॥ नारायणस्यसम्यग्व्याहरणात्व्याहृतिर्गायत्री । तदर्थाःपुरुषसूक्तगतास्त्रयोवर्गाइतिशेषः । पुरुषसूक्तेचनपुरुषपशोर्हिरण्यगर्भस्यवाप्रतिपाद्यत्वंशंक्यं । पूर्णत्वादिनानिमित्तेनतस्यैवपरमेश्वरस्यपुरुषशब्दवाच्यत्वात् । यथै वपौरुषंसूक्तंविष्णोरेवाभिधायकं । सर्वतःपौरुषेसूक्तेगुणाविष्णोरुदीरिताइत्याद्यागमाच्च । अन्यथानारायणपरगायत्रीव्याख्यान रूपतायाअनुपपत्तिप्रसंगादितिभावः । नन्वेवंसिद्धेविष्णोःपुरुषसूक्तार्थत्वेकिंस्यात् नहिपुरुषसूक्तमेववेदइतिचेत् पुरुषसूक्तार्थ त्वेनभगवतःसर्ववेदार्थत्वमेवसिद्धं । वेदाःपुरुषसूक्तगाइत्यागमेनवेदानांपुरुषसूक्तार्थतायाअवगतत्वादित्याह ॥ **व्याहृत्यर्था ऋगादयइति.** ॥ सर्ववेदोक्तसर्वस्वव्याहृतेर्हेतोःव्याहृतिशब्देनवर्गत्रयात्मकंपुरुषसूक्तंग्राह्यं । इतिहासपुराणंचेतिद्वंद्वैकवद्भावः । इतिहासःपुराणंचेत्यपिक्वचित्पाठः । नसर्वमपिपंचरात्रंप्रमाणं वासुदेवात्संकर्षणोनामजीवोजायतइत्यादिनाऽसंभावितायाएवजी वोत्पत्तेस्तत्राभिधानादेतेषांजीवजननादिप्रतिपादकवाक्यानामप्रामाण्यमेवेतिकेचित् तन्निरासायसर्वशइत्युक्तं । तथाचयथाजीव जननादिप्रतिपादकवाक्यत्वंनास्तितत्प्रकारश्चजीवाभिमानिशेषस्यनाम्नासंकर्षणस्यत्वित्यनुव्याख्यानोक्तरीत्याद्रष्टव्यः । तथाच

भाष्यं ॥ इतिहासःपुराणंचपंचरात्रंचसर्वश' ।

ऋगादयश्चत्वारइतिहासपुराणं सर्वशः समस्तंपंचरात्रंचेत्येतेसर्वेग्रंथाव्याहृत्यर्थपुरुषसूक्तार्थास्तद्व्याख्यानरूपाइत्यर्थः । ननुसर्व वेदानांकार्यपरत्वोक्तेः कथमीश्वरपरत्वमितिचेन्न । इष्टेष्टसाधनतातिरिक्तकार्यत्वस्याप्रामाणिकत्वात् । भगवतएवेष्टत्वा दिष्टसाधनत्वाच्च । यथोक्तमनुव्याख्याने । तदिष्टंसाधनंतथा । कार्यसाधनमिष्टस्यभगवानिष्टदेवता । मुख्येष्टंवासु मनसामिति । अन्यथाभगवत्परपुरुषसूक्तव्याख्यानरूपतानुपपत्तिरितिभावः । सर्वेवेदायत्पदमामनंतीत्यादिश्रुतिसिद्धम पिभगवतःईश्वरस्यसर्ववेदार्थत्वंन्यायेनोपपादयितुंप्रमाणकर्तुःप्रयत्नः । अनेनेश्वरःसर्ववेदार्थोभवितुमर्हति सर्ववेदव्याख्ये यपुरुषसूक्तव्याख्येयगायत्रीव्याख्येयव्याहृतिव्याख्येयोंकारार्थत्वात् । योयद्व्याख्येयार्थः सतदर्थोयथासंप्रतिपन्नइत्यनुमा नमुक्तंभवतीतिद्रष्टव्यं । स्यादेतत् ईश्वरःसर्ववेदार्थस्तद्व्याख्येयोंकारार्थत्वात् योयद्व्याख्येयार्थः सतदर्थो यथासंप्र तिपन्नइतिवा सर्वोवेदईश्वरपरः तत्परोंकारव्याख्यानरूपत्वादितिवा साक्षादेवानुमानंकिंनक्रियते । तद्यथाशंकु नासर्वाणिपर्णानिसंतृण्णान्येवमोंकारेणसर्वावाक्संतृण्णेत्यादिश्रुत्याहेत्वर्थसमर्थनंभविष्यति । किमनेनपरंपराश्रयणेन । स त्यं । तथापितद्यथेतिवाक्यांतरबलेनापिनसर्वावागोंकारव्याख्यानंसाक्षात् किंनामोक्तप्रकारेणपरंपरयैवेतिज्ञापयितुमेवमुक्तं । नपरंपराश्रयणमित्यदोषः । प्रसंगात्भूरादिचतुर्णांव्याहृतिशब्दवाच्यत्वंकुतइत्याशंकायांतेषुव्याहृतिशब्दंनिर्वक्ति ॥ **सम्य गिति** ॥ विष्णोःसम्यग्व्याहरणात्प्रतिपादनात्व्याहृतयस्त्विति श्रुताः श्रुत्युक्ताः भूरादयइतिशेषः । प्रकारांतरेणार्थमाह ॥

भाष्यं । सम्यग्व्याहरणाद्विष्णोश्श्रुताव्याहृतयस्त्विति ।

**सर्वेति**॥उशब्दएवार्थे । सर्ववेदोक्तंयत्सर्वस्वं स्फूर्तिरूपत्वभूरिवीर्यत्वसुबलरूपत्वपूर्णत्वरूपंतस्यव्याहृतेरेव भूरादीनांव्याहृतित्वं व्याहृतिशब्दवाच्यत्वमित्यर्थः । अनभिमतव्यावृत्त्यर्थमवधारणं । तेननोक्तवक्ष्यमाणनिर्वचनविरोधइतिज्ञेयं । पुनरपिप्रकारांतरेणनिर्वक्ति ॥ **विशेषेणेति**॥ अथवा भक्तंप्रतिइमंअनिरुद्धादिरूपिणंविष्णुंविशेषेणइतरमंत्रापेक्षयाऽतिशयेनाहरंति अभीष्टदातारंकुर्वंतीतियावत् । इतिव्युत्पत्त्याभूरादयोव्याहृतिशब्दवाच्याःस्मृताइत्यर्थः ॥१३–१४॥ **तथाचभूर्भुवःसुवरितिवेत्यादेरित्थमक्षरयोजना** ॥पूर्ववेदविद्याभ्यासिनोमेधादिप्राप्त्यर्थंविद्यानिरूपिताः इदानींव्याहृतिनिष्ठांविद्यामाह ॥**भूर्भुवःसुवरितिवाइत्यादिना**॥ भूर्भुवःसुवरित्येताः वैप्रसिद्धाःतिस्रोव्याहृतयः विष्णोःसम्यक्व्याहरणात् सर्ववेदोक्तसर्वस्वव्याहृतेर्वा विशेषेणाहरंतिभक्तंप्रतिअनिरुद्धादिरूपिणंविष्णुमितिवाव्याहृतिशब्दवाच्याः । तथाव्याहृतयोव्याहृतिवाच्याःभूर्भुवःसुवरित्येताःतिस्रोऽनिरुद्धादिमूर्तयोवैप्रसिद्धाः । तत्रस्फूर्तिरूपत्वादनिरुद्धोभूर्नामा भूरिवीर्यत्वतःप्रद्युम्नोभुवर्नामा सुबलरूपत्वात्सुवर्नामासंकर्षणः माहाचमस्यः अतिचमत्कृतित्वान्महाचमसनामाविष्णुस्तंयातिजानातीतिमाहाचमस्योब्रह्मा समस्तव्याहृतीनांप्रवेत्तापि महइतिएतांव्याहृतिं पूर्णत्वतस्तत्प्रतिपाद्यांवासुदेवाख्यां तासांतिसृणांव्याहृतीनांतत्प्रतिपाद्यानांअनिरुद्धादिमूर्तीनां चतुर्थीं चतुर्थी



---

भाष्यं ॥ सर्ववेदोक्तसर्वस्वव्याहृतेर्व्याहृतित्वमु । विशेषेणाहरंतीमंविष्णुमित्यथवास्मृताइतिव्याहृतिसारे ॥ १३–१४ ॥

उप ॥ भूर्भुवस्सुवरितिवाएतास्तिस्रोव्याहृतयः । तासामुहस्मैतांचतुर्थीं । माहाचमस्यःप्रवेदयते । महइति । तद्ब्रह्म । सआत्मा । अंगान्यन्यादेवताः ॥ १३ ॥

त्वेनप्रवेदयतेजानाति इत्येतत्हस्मप्रसिद्धमित्यर्थः। तत् व्याहृतिचतुष्टयप्रतिपाद्यं अनिरुद्धादिरूपचतुष्टयं गुणबृंहणाद्ब्रह्मेत्युच्यते। सः महइतिव्याहृतिप्रतिपाद्यस्तन्नामावासुदेव आत्मा अंगी मध्यदेहः मूलरूपस्यहरेर्मध्यदेहगइतियावत् । तस्यवासुदेवस्यभूरादिव्याहृतिप्रतिपाद्यास्तन्नामिकाः अन्याः विशेषबलेनैवान्यत्वादिव्यवहारभाजिन्योदेवताः अनिरुद्धादिमूर्तयः अंगानि । तत्र भूर्नामाऽनिरुद्धः शिरः भुवोनामाप्रद्युम्नोबाहू । सुवर्नामासंकर्षणःपादावितिविवेकः । यद्वासःअनिरुद्धादिचतुरात्माजनार्दनः आत्माब्रह्मादिसर्वदेवानांस्वामी । अन्यादेवताः ब्रह्माद्याअंगानि तेनैवजातत्वादागंतुकानि अप्रधानानि परिवारतयासेविकाइतियावत् ॥१३॥ भूरादिव्याहृतिवाच्यानांतन्नामकानिरुद्धादिमूर्तीनांउपास्त्यर्थमधिष्ठानानिनामांतराणिचाह ॥ **भूरितिवाइत्यादिना** ॥ भूरितिव्याहृतिवाच्योनिरुद्धः अयंअपरोक्षःलोकः । भूलोकः तत्रस्थितः । तथासमीपस्थत्वात्प्रकाशरूपत्वाच्चायंलोकशब्दवाच्यः इत्येतत्वै प्रसिद्धं । भुवइतिव्याहृतिवाच्यःप्रद्युम्नः अंतरिक्षं अंतरिक्षलोकस्थितः । अंतरीक्षणादंतरिक्षशब्दवाच्यश्च । सुवरितिव्याहृतिवाच्यः संकर्षणः असौपरोक्षः इंद्रियागोचरइतियावत् । लोकः स्वर्गलोकः तत्रस्थितः तथाप्राणेस्थितत्वादसुशब्दवाच्यः प्रकाशरूपत्वाल्लोकः असुश्चासौलोकश्चेत्यसुलोकइतिभाष्ये छांदसंसमासेविभक्त्यलोपमंगीकृत्यासौलोकइत्युक्तं । विशेषणंविशेष्येणबहुलमित्यत्रबहुलग्रहणाद्विशेषणयोरेवसमासः । तथाचपूर्वयोजनायां

उप ॥ भूरितिवाअयंलोकः । भुवइत्यंतरिक्षं । सुवरित्यसौलोक । महइत्यादित्य । आदित्येनवावसर्वेलोकामहीयंते । भूरितिवाअग्निः । भुव इतिवायुः । सुवरित्यादित्य ।

पदद्वयं । अत्रत्वेकंपदमितिद्रष्टव्यं । महइतिव्याहृतिवाच्योवासुदेवः आदित्यः आदित्यस्थवामनरूपेणादितेःसुतत्वादादित्य शब्दवाच्यश्च । महशब्दोयमकारांतोनतुसकारांतः । तथात्वेमहरित्यादिप्रयोगापत्तेरितिज्ञातव्यं । आदित्यस्यमहत्वमुपपादयति ॥ **आदित्येनवावेति** ॥ प्रसिद्धादित्येनसर्वेलोकाःभूम्यंतरिक्षासौलोकाः महीयंते प्रकाशदानेनपूज्यंते प्रकाश्यंतइतियावत् । इत्येतत् । वाव प्रसिद्धं । तथाआदित्येनतत्रस्थेनतन्नामकेनवासुदेवेन सर्वेलोकाः अयंलोकांतरिक्षासौलोकशब्दवाच्या अनिरुद्धप्रद्युम्नसंकर्षणामहीयंतेपूज्यंते स्वेच्छयेत्यर्थः। भूःअनिरुद्धः अग्निः अग्न्यंतर्गतः अग्नौस्थितत्वादग्निशब्दवाच्यश्च। भुवःप्रद्युम्नोवायुःवाय्वंतर्गतः। जगद्बंधकत्वाज्जगच्चेष्टकत्वाद्वावायुशब्दवाच्यश्च । सुवःसंकर्षणः आदित्यः तत्रस्थः वामनरूपेणादितेःसुतत्वात्तच्छब्दवाच्यश्च । महोवासुदेवः चंद्रमाःतत्रस्थितः आल्हादकत्वात्चंद्रमश्शब्दवाच्यश्च । तस्यमहत्त्वमुपपादयति ॥ **चंद्रमसेति** ॥ सर्वाणिज्योतींषि अग्निवाय्वादित्याख्यानि चंद्रमसामहीयंतेपूज्यंते । अलंक्रियंतइतियावत् । तथा चंद्रमसातत्रस्थेनतन्नामकेनवासुदेवेनसर्वाणिज्योतींषि अग्निवाय्वादित्यसंज्ञकानिअनिरुद्धादीनिमहीयंतइत्यर्थः । एवमुत्तरत्रापि योजनाद्रष्टव्या । ऋचः ऋग्वेदांतर्गतः अर्च्यत्वात्तच्छब्दवाच्यश्च सामानि सामवेदांतर्गतः सर्वरूपेषुसमत्वात्सामशब्दवाच्यश्च । यजूंषि यजुर्वेदांतर्गतः याज्यत्वाद्यजुःशब्दवाच्यश्च । अत्रानिरुद्धादीनांबहुरूपत्वादृचइत्यादिबहुवचनांतशब्दवाच्यत्वं

उप ॥ मह॒इति॑चं॒द्रमाः॑ । चं॒द्रम॑सा॒वाव॒सर्वा॑णि॒ज्योतीं॑ᳪषि॒मही॑यंते । भूरिति॒वाऋच॑ः । भुव॒इति॒सामा॑नि । सुव॒रिति॒यजूं॑ᳪषि । मह॒इति॒ब्रह्म॑ ।

युक्तमितिद्रष्टव्यं । ब्रह्म अखिलवेदेप्रतिपाद्यतयास्थितत्वात् बृहत्त्वाद्ब्रह्मशब्दवाच्यश्च । ब्रह्मणा प्रतिपाद्येननिमित्तेनसर्वेवेदाः ऋगाद्याःमहीयंतेशोभंते । तथाब्रह्मणा वेदप्रतिपाद्येनबृहत्त्वात्तच्छब्दवाच्येनचवासुदेवेन सर्वेवेदाऋगादिशब्दवाच्याअनिरुद्धाद्याः । प्राणः प्राणांतर्गतः प्रकर्षेणआसम्यकूऊर्ध्वलोकंप्रतिदेवानांनयनात्तच्छब्दवाच्यश्च । अपानःतदंतर्गतः अप अवाक् आसम्यक् दैत्यानांनयनात्तच्छब्दवाच्यश्च । व्यानस्तदंतर्गतः विविधंयथास्यात्तथाअनेकप्रकारेणेतियावत् । सत्ताप्रतीतिप्रवृत्तिदानेनआसम्यक्नयनात्प्रेरणात्तच्छब्दवाच्यश्च । अन्नमन्नस्थः अद्यत्वेनसर्वोपजीव्यत्वेनान्नशब्दवाच्यश्च । अन्नेनप्रसिद्धेनसर्वेप्राणाद्याःमहीयंतेपूज्यंतेआप्यायिताःभवंति । तथान्नेनतत्रस्थेनतच्छब्दवाच्येनवासुदेवेन सर्वेप्राणाः प्राणादिशब्दवाच्याअनिरुद्धाद्याःमहीयंतेइत्यर्थः । उपसंहरति ॥ तावाएताइति ॥ अत्रैवंप्रत्येकशइतिपदद्वयमध्याहार्यं । तथाच तावाएताश्चतस्रोऽनिरुद्धादिमूर्तयः एवं भूरितिवाअयंलोकइत्यादिप्रकारेण प्रत्येकशश्चतुर्धा । एवंसति षोडशमूर्तयःसंपन्नाइत्यर्थः । एवंषोडशमूर्तिवेत्तुःफलमाह ॥ चतस्रश्चतस्रइति ॥ याइतिशेषः । याश्चतस्रःव्याहृतयो भूरादिव्याहृतिचतुष्टयप्रतिपाद्याअनिरुद्धादिमूर्तयः याश्चप्रत्येकशश्चतस्रश्चतस्रः भूरितिवाअयंलोकइत्यादिप्रकारेणषोडशमूर्तयइतियावत् । ताःयो माहाचमस्यनामाचतुर्मुखोवेदसः सावधारणमेतत् । सएव ब्रह्मवेद सम्यक्परब्रह्मज्ञानी तस्यैवस

उप ॥ ब्र॒ह्मणा॒वावसर्वे॒वे॒दामहीयंते । भूरिति॒वैप्राण । भुवइत्यपानः । सुवरिति॒व्यान । महइत्यन्नं । अन्ने॒नवावसर्वे॒प्राणामहीयंते । तावा ए॒ताश्च॒तस्रश्च॒तुर्धा । चतस्रश्चतस्रोव्याहृतयः । तायोवेद॑ । सवेदब्रह्म । सर्वेस्मैदे॒वाब॒लिमावहंति ॥ १४ ॥

म्यक्षोडशात्मस्वरूपवित्त्वादितिभावः । तस्मादितिशेषः । अस्यैवसम्यक्षोडशात्मविच्चा दस्मैसम्यक्षोडशात्मविदेचतुर्मुखाय अमुक्तिगायमुक्तिगायच सर्वेदेवाः शेषगरुडाद्याःअमुक्ताःमुक्ताश्च बलिंपूजांच आअतितरां वहंति प्रापयंति कुर्वंतीतियावदित्यर्थः ॥ १४ ॥ ( अथभाष्यार्थः ) एवंभूरादिनामिनोनिरुद्धादेर्लोकादावुपास्तिमभिधायदेहेचोपास्तिमधिष्ठानकथनपूर्वकमाह ॥ **सयएषोंतर्हृदयइत्यादिना** ॥ अत्रमनोमयेंद्रयोनिविव्यपशब्दान्कोशादिपरताप्रतीतिवारणायप्रमाणैवअनिरुद्धादिरूपचतुष्टयपरतयाव्याचष्टे ॥ **यएषइत्यादिना** ॥ मनोमयःपुरुषइत्यस्यार्थोनिरुद्धइति । अंतरेणतालुकेइत्यादेरर्थःप्रद्युम्नइत्यादि तालुकेअंतरेणेत्यस्यार्थः तालुमध्यस्थइति । यएषस्तनइवावलंबतेइत्यस्यार्थोलंबिन्यामिति । इंद्रनामकः प्रद्युम्नःतालुमध्यस्थः । किंतत्तालुमध्यमित्यतउक्तं । लंबिन्यामिति । अजागलस्तनवल्लंबमानायांअणुजिह्वायामित्यर्थः । यत्रासौकेशांतोविवर्ततेइत्येतद्व्याचष्टे ॥ **व्याख्यइति** ॥ यइतिश्रवणात्सइतिलभ्यते । यःसंकर्षणःसुपर्णात्मासुपर्णस्वरूपः । अतःसुपर्णरूपत्वादेव सःव्याख्यः वीतिआख्यायस्यासौतथोक्तः । विःपक्षिपरमात्मनोरित्यभिधानाद्विशब्दस्यविष्णुवाचित्वात् । सःकेशांते केशानांमूलभागेवर्ततइत्यर्थः । अनेनकेशांतइतिप्रथमा सप्तम्यर्थइत्युक्तंभवति । व्यपोह्यशीर्षकपालइत्यस्यार्थमाह ॥ **वासुदेवइति** ॥ हीत्यस्याभिप्रायः स्मृतइति । वासुदेवस्यव्यपशब्दवाच्यत्वेनिमित्तमाह ॥ **यस्मादिति** ॥ विभुरपरि

भाष्यं ॥ यएषहृदयाकाशस्त्वनिरुद्धस्तुतद्गत । प्रद्युम्नस्तालुमध्यस्थोलंबिन्यामिद्रनामक । व्याख्यस्सुपर्णरूपत्वात्केशांतेवर्ततेतुय । संकर्षणस्सुपर्णात्मावासुदेवोव्यपस्स्मृतः । यस्माद्व्यपगतस्थाताजगतिप्रलयेविभु ।

च्छिन्नोवासुदेवःप्रलयकालेजगतिव्यपगतेनष्टेसतियतःस्थाता तस्माद्वासुदेवोव्ययःस्मृतइत्यर्थः। अशीर्षकपालेइत्यत्रनञ्पर्युदासार्थः। तथाचशीर्षसंबंधिनी ये कपाले उभयपार्श्वभागावितियावत्। ताभ्यांभिन्नेस्थाने कपालादुपरिगतस्थानइतियावदित्यर्थमभिप्रेत्याह ॥ **अशीर्षककपालेअसाविति** ॥ पुनरपिभूरादिनामिनोनिरुद्धादेरधिदैवमग्न्यादावधिष्ठानेउपास्तिप्रकारमाह ॥ **भूरित्यग्नावित्यादिना**। तत्रभूरित्यादिशब्दःअग्न्यादौविषयेतद्वाचकत्वेनेतियावत्। प्रतितिष्ठतीत्यन्यथाप्रतीतिवारणायप्रमाणेनैवव्याख्याति ॥ **अनिरुद्धस्त्विति** ॥ भूर्नामानिरुद्धोहुतमश्नातीतिहुताशेअग्नौसंव्यवस्थितइत्यर्थः। भुवइतिकीर्तितोभगवान्प्रद्युम्नोवायौसंव्यवस्थितइति तिष्ठतीतिवासंबंधः। सुवर्नामासंकर्षणइत्यन्वयः। ब्रह्मशब्दस्यानेकार्थत्वाद्ब्रह्मणीत्यनूद्यचतुर्मुखेस्थइतिव्याख्यातं। वासुदेवस्यपरिच्छिन्नेचतुर्मुखाद्यधिष्ठानेस्थितत्वोक्त्याप्राप्तपरिच्छिन्नत्वशंकांवारयितुंतन्महिमानंवक्तुंप्रवृत्तं आप्नोतिस्वाराज्यं इत्यादिवाक्यंव्याचष्टे ॥ **सवासुदेवइत्यादिना** ॥ स्वाराज्यं स्वस्याधीनतयाआसमंताद्विद्यमानंराज्यं अव्याकृताकाशादिकंजगत्व्याप्नोतीतिशेषः। आप्नोतिमनसस्पतिमित्यस्यार्थः स्वाराज्यंव्याप्यस्थितत्वादेवास्मिन्देहस्थितेमनसस्पतौअनिरुद्धेस्वकीयेपरिच्छिन्नेरूपेचसंव्याप्तइति। आप्नोतिमनसस्पतिंवाक्पतिरित्यादेर्हेतुहेतुमद्भावमभिप्रेत्यार्थमाह ॥

---

भाष्यं ॥ अशीर्षककपालेसौकपालादुपरिस्थितः। अनिरुद्धस्तुभूर्नामाहुताशेसंव्यवस्थितः। प्रद्युम्नोभगवान्वायौभुवइत्येवकीर्तितः। संकर्षणस्सुवर्नामासूर्येतिष्ठतिकेशवः। महोनामावासुदेवोब्रह्मणिस्थश्चतुर्मुखे। सवासुदेवस्स्वाराज्यंव्याप्यास्मिन्मनसस्पतौ। अनिरुद्धेचसंव्याप्तः

ततइति ॥ मनसस्पतित्वादेववागादिनांवागादीनांपतिरित्यर्थः । नामिदीर्घाभावश्छांदसः । नराजादिवत्वाद्यतएवास्यवासुदेवस्यवागादिपतित्वमित्यभिप्रेत्यप्रवृत्तस्यैतत्ततोभवतीतिवाक्यस्यार्थमाह ॥ वागादिष्विति ॥ तथाचएषवासुदेवरूपीजनार्दनएतदेतेषुवागादिषुततोनित्यस्थितइतिवाक्यार्थउक्तोभवति । अयंभावः । मनोनधिष्ठितेंद्रियाणास्वकार्यजननाक्षमत्वान्मनोधिष्ठितत्वंतावदिंद्रियाणामपेक्षितं । मनसिचानिरुद्धस्यसत्त्वेनतेषांतद्व्याप्तत्वप्राप्तौमनोनामकानिरुद्धेचवासुदेवस्यव्याप्ततयावस्थितत्वेनवागादींद्रियेषुवासुदेवस्तिष्ठतीतिप्राप्त्याभवतिवासुदेवोवागादिपतिरिति । ननुभगवतःइतरत्राद्दष्टंजगद्व्यापकत्वंकथंयुक्त । स्वअनिरुद्धाख्यस्वरूपव्याप्तत्वंचसुतरामयुक्त । व्याप्यव्याप्तृभावस्यभेदनियतत्वाद्भगवतिचतदभावादित्याशंकायामाह ॥ स्वव्यापीचेति ॥ सःवासुदेवरूपीस्वकीयानिरुद्धादिरूपव्यापी । नित्यैश्वर्योपपादनायैवेश्वरइत्युक्तं । प्रकृतस्यैववासुदेवस्यमहिमानंवक्तुआकाशशरीरंब्रह्मेत्यादिप्रवृत्तं । तत्राकाशस्यैवसाक्षाच्छरीरत्वमुच्यतइतिप्रतीतिनिरासायव्याचष्टे ॥ आकाशवदिति ॥ मध्यमपदलोपीसमासइत्यभिप्रेत्याकाशवदित्युक्तं । आकाशवत्सर्वगतश्चनित्यइतिश्रुत्यनुसारेणवत्यर्थभूतंसादृश्यंव्याप्तेतिविवृतं ॥ गुणपूर्तितइति ॥ निर्दोषगुणपूर्णस्वरूपत्वादित्यर्थः । यथोक्तं । निर्दोषगुणपूर्णत्वाद्यमाहुःसत्यमच्युतमिति । प्राणाराममित्यस्यार्थमाह ॥ वायोरिति ॥ आङोर्थोविशेषेति । तथाचप्राणस्याधिकारिवर्गेषुआसम्यक् विशेषतइतियावत् । रामंरमकं

भाष्य । ततोवागादिनांपति । वागादिषुस्थितोनित्यभवत्येवजनार्दन । स्वव्यापीचजगद्व्यापीनित्यैश्वर्यात्सईश्वर । आकाशवद्व्याप्तदेहस्सत्यात्मागुणपूर्तित । वायोर्विशेषरमको

सुखकारीतिव्याख्यातंभवति । प्राणाराममित्यस्यैवार्थांतरमाह ॥ बलेति ॥ तथाचप्राणंबलरूपंचतत् आराममानंदरूपंचेति प्राणाराममितिव्याख्यातंभवति । मनआनंदमित्यस्यार्थमाह ॥ ज्ञानेति ॥ मनअवबोधनइतिधातोर्मनोज्ञानरूपंचतत्आनंदरूपंचेतिमनआनंदमितिव्याख्यातंभवति । शांतिशब्दार्थमाह ॥ शांतिनामेति ॥ तथाचशस्यसुखस्य सुखोन्नतिपरंपरायाःइति यावत् । अंति अंतेस्थितं निरवधिकसुखोन्नतियुक्तमित्यर्थउक्तोभवति । समृद्धमित्यस्यार्थमाह ॥ स्वतःपूर्तेरिति ॥ तथाच सम्यक्स्वतः अन्यप्रसादमंतरेणेतियावत् । ऋद्धंपूर्णंसमृद्धमित्यर्थउक्तोभवति । इतिप्राचीनयोग्योपास्वेत्येतदप्रतीतेर्व्याचष्टे ॥ इत्युपास्वेति ॥ प्राचीनशब्दार्थःप्राथमिकइति । प्राथमिकोयोग्योमुख्याधिकारीत्यर्थः । तत्रहेतुमाह ॥ प्राधान्यादिति ॥ अधिकार्युत्तमत्वादित्यर्थः । इतिप्राचीनयोग्योपास्वेतिकंप्रतिकोविधत्तेइत्यतआह ॥ इतिपूर्वंहीति ॥ अनेनमदुपासनेत्वंयोग्य इत्यस्मद्युष्मच्छब्दविषयोपिदर्शितोभवति । अनु० ॥६॥ तथाचायमर्थः ॥ १५–१७ ॥ अथखंडार्थः ॥ एवंभूरादिनामिनोनिरुद्धादेर्लोकादावुपास्तिमभिधायदेहेचोपास्तिमधिष्ठानकथनपूर्वमाह ॥सयएषइत्यादिना॥ यएषःप्रसिद्धःहृदयेंतराकाशोवर्तते तस्मिन्दहराकाशेसोयंमनोमयःमनःप्रधानोमनस्पतिरितियावत् । पुरुषोनिरुद्धोस्ति । सकीदृशइत्यतआह ॥ अमृतइत्यादि ॥ अमृतो

---

भाष्यं ॥ बलानंदस्वरूपवान् । ज्ञानानंदस्वरूपोसौशांतिनामासुखोन्नते । अंतगत्वात्स्वत पूर्तेस्समृद्धंतत्प्रकीर्तितं । इत्युपास्वप्राथमिकोयोग्यस्त्वं मदुपासने । प्राधान्यादितिपूर्वंहिप्राहविष्णुश्चतुर्मुखमितिब्रह्मसारे ॥ अनु० ॥ ६ ॥

उप ॥ सयएषोंतर्हृदयआकाशः । तस्मिन्नयंपुरुषोमनोमयः । अमृतोहिरण्मयः ।

देहनाशेपिनाशशून्यः हिरण्मयः। हिरण्यं बाह्यसुखविलक्षणंसुखं हिरुक्सुखंहिरण्यस्यादितिस्मृतेः। छांदसोयकारलोपः। मयट्चाधिक्यार्थे। तथाचेतरविलक्षणपूर्णानंदस्वरूपइत्यर्थः। यथोक्तं सएवचहिरण्मयः। हिरुक्सुखंहिरण्यंस्याद्बाह्यानंदात्पृथग्यतः। आधिक्यार्थेमयड्यस्मादधिकानंदरूपकइति। यद्वामयट्पूर्णत्वार्थकः। तथाचपूर्णौहि हितौ निहितौ रश्चणश्चरणौ रत्यानंदौ यस्मिन्सहिरण्मयः। रत्यानंदौपूर्णनित्यौहितौतेनहिरण्मय इतिवचनात्। अथवा सुवर्णवर्णत्वाद्धिरण्मयः। स्वर्णवर्णतयावापि हिरण्मयइतीरितइत्युक्तेः। प्रद्युम्नस्यस्थानमाह ॥ अंतरेणेति ॥ तालुकेतालुकस्य अंतरेणमध्ये यएषःप्रसिद्धः स्तनइव अजागलस्तनइवावलंबते सा इंद्रस्यतन्नामकस्यप्रद्युम्नस्ययोनिरावासस्थानं। योनिशब्दापेक्षयासेतिस्त्रीलिंगं। योनिष्टइंद्रनिषदेअकारीतिप्रयोगेणयोनिशब्दस्यस्थानार्थत्वावगमात्। संकर्षणस्थानमाह ॥ यत्रासाविति ॥ यत्रयः वि सुपर्णरूपत्वात्विनामकः संकर्षणः। असौ यत्रदेहेकेशातः प्रथमासप्तम्यर्थे। केशांते केशमूलेवर्तते वासुदेवस्थानमाह ॥ व्यपोह्येति ॥ जगतिव्यपगतेसतिप्रलयकालेस्थातृत्वेनव्यपः व्यपशब्दवाच्यः हि तथात्वेनस्मृत्यादिप्रसिद्धः वासुदेवः अशीर्षकपाले नञ्पर्युदासार्थः। तथाचशीर्षसंबंधिनी येकपाले उभयपार्श्वभागावितियावत्। ताभ्यांभिन्नेस्थाने कपालादुपरिगतस्थानइतियावत्। तिष्ठतीत्यर्थः ॥ १५ ॥ पुनरपिभूरादिनामिनोनिरुद्धादेरधिदैवमग्न्यादावधिष्ठानेउपास्तिप्रकारमाह ॥ भूरित्यग्नावित्यादिना ॥

उप ॥ अंतरेणतालुके। यएषस्तनइवावलंबते। सेंद्रयोनि। यत्रासौकेशांतोविवर्तते। व्यपोह्यशीर्षकपाले ॥ १५ ॥ भूरित्यग्नौप्रतितिष्ठति।

भूरितिनामानिरुद्धोग्नौप्रतितिष्ठतिसंव्यवस्थितः । भुवइतिकीर्तितःप्रद्युम्नोवायौतिष्ठति । सुवरितिनामासंकर्षणःआदित्ये सूर्येतिष्ठति । महइतिनामावासुदेवोब्रह्मणिचतुर्मुखेतिष्ठति । वासुदेवस्यपरिच्छिन्नेचतुर्मुखाख्याधिष्ठानेस्थितत्वोक्त्याप्राप्तपरिच्छिन्नत्वशंकांपरिहरति ॥ आप्नोतीति ॥ प्रभुःचतुर्मुखस्थोवासुदेवः स्वाराज्यं स्वस्याधीनतयाआसमंताद्विद्यमानंयद्राज्यं अव्याकृताकाशादिकंजगत् तत्आप्नोति । तथामनसस्पतिंस्वकीयमनिरुद्धाख्यंरूपंचनित्यैश्वर्ययुक्तत्वादाप्नोति । अतएववाक्पतिरित्यादि विज्ञानपतिः बुद्धिरूपेंद्रियपतिः । नराजादिवत्बाह्यतएवास्यवागादिपतित्वमित्याह ॥ एतदिति ॥ एतत् एतेषुवागादींद्रियेषु ततोनित्यंस्थितइत्यर्थः । मनोनधिष्ठितेंद्रियाणांस्वकार्यजननाक्षमत्वान्मनोधिष्ठितत्वंतावदिंद्रियाणामपेक्षितं मनसिचानिरुद्धस्यसत्त्वेनतेषांतद्व्याप्तत्वप्राप्तौमनोनामकानिरुद्धेचवासुदेवस्यव्याप्ततयावस्थितत्वेनवागादींद्रियेषुवासुदेवस्तिष्ठतीतिप्राप्त्याभवतिवासुदेवोवागादिपतिरितिभावः ॥ १६ ॥ प्रकृतस्यैववासुदेवस्यमहिमानमाह ॥ आकाशेति ॥ वासुदेवाख्यंब्रह्म आकाशशरीरं आकाशवत्व्याप्तशरीरं सत्यात्म निर्दोषगुणस्वरूपं प्राणारामं प्राणस्यअधिकारिवर्गेआसम्यक् विशेषतइतियावत् । रामं रमकंसुखकारि । यद्वा प्राणंबलरूपंचतत् आराममानंदरूपंचेतिप्राणारामं मनआनंदं मनअवबोधनइतिधातोःमनोज्ञानरूपंचतत् आनंदंआनंदरूपंचेतितथोक्तं । शांति

---

उप ॥ भुवइतिवायौ। सुवरित्यादित्ये । महइतिब्रह्मणि । आप्नोतिस्वाराज्यं । आप्नोतिमनसस्पतिं। वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः एतत्ततोभवति ॥ १६ ॥ आकाशशरीरंब्रह्म । सत्यात्मप्राणारामंमनआनंदं । शांतिसमृद्धममृतं ।

शस्यसुखस्यतदुन्नतिपरंपरायाइतियावत् । अंति अंतेस्थितं । निरवधिकसुखोन्नतियुक्तमित्यर्थः । समृद्धं संसम्यक्स्वतः अन्य प्रसादमंतरेण ऋद्धंपूर्णं । अमृतंनित्यमुक्तं । हे प्राचीनयोग्य अधिकारिवर्गेषुप्राधान्यात्प्राथमिकयोग्य मुख्याधिकारिन्निति यावत् । इति पूर्वोक्तप्रकारेण । अनिरुद्धादिरूपिणंमामुपास्व ममोपास्तिंकुर्विंतिचतुर्मुखंप्रतिविष्णोर्वचनं ॥ १७ ॥ ( अथभाष्यार्थः ) । वेदविद्याप्राप्त्यर्थंपूर्वभाविविद्यांतरमाह ॥ **पृथिवीत्यादिना** ॥ तत्रपाङ्क्तेनैवपाङ्क्तंस्पृणोतीत्येतत्व्याचष्टे ॥ **पृथिव्याद्यमिति** ॥ तत्रपाङ्क्तमित्यस्यार्थःपृथिव्याद्यंपाङ्क्तंषट्कमिति । पाङ्क्तेनैवेत्यनूद्यनारायणादिरूपेणेतिव्याख्यातं । प्रविष्टःसन्निति शेषः । स्पृणोतीत्यस्यार्थोबलयतीति । स्वस्वकार्यक्षमंकरोतीत्यर्थः । इतिऋषिरवोचदित्यत्रोक्तऋषिःकइत्यपेक्षायां तंदर्शयति ॥ **इत्युवाचेति** ॥ आकाशआत्मेत्यत्रात्माजीवइत्यसत् । तस्याधिभूतत्वाभावादित्यभिप्रेत्यात्मशब्दार्थमाह ॥ **आत्माअहंकारतत्वमिति** ॥ तस्यभूतोपादानत्वेनाधिभूतत्वमुपपन्नमितिभावः ॥ १८ ॥ अयमर्थः ( ॥ अथखंडार्थः ) दिशःप्राच्याद्याः । अवांतरदिशाःआग्नेयाद्याःकोणाः । टापंचापिहलंतानांयथावाचानिशादिशेतिवचनात् अवांतरदिशाइतिआका

उप ॥ इतिप्राचीनयोग्योपास्व ॥ १७ ॥

भाष्यं ॥ पृथिव्याद्यंपाङ्क्तषट्कंपाङ्क्तेनैवस्वयंहरिः । नारायणादिरूपेणबलयत्यंजसाप्रभुः । इत्युवाचस्वयंविष्णुर्वेदद्रष्टागुणाधिकइति । तत्वसंहितायां । आत्माअहंकारतत्वं ॥ १८ ॥

उप ॥ पृथिव्यंतरिक्षंद्यौर्दिशोवांतरदिशाः ।

रांतत्वंयुक्तं । ओषधयः फलपाकांताःव्रीह्यादयः । वनस्पतयः अश्वत्थाद्याः । आत्मा अहंकारतत्वं । इत्यधिभूतं । भूतसंबंधि पाङ्क्तं इतिनिरूपितमित्यर्थः । अत्रपृथिव्यग्निवाय्वाकाशानांभूतत्वात् पृथिव्यग्न्यादिशब्दोक्तानामेवदेवानांभूताभिमानित्वा दंतरिक्षद्युलोकयोरोषध्यादीनांचभूतकार्यत्वात् आत्मशब्दोक्तस्याहंकारतत्वस्यचभूतोपादानत्वात्पृथिव्यादीनामधिभूतत्वंयुक्त मित्याशयेनइत्यधिभूतमित्येवोक्तमितिद्रष्टव्यं । अव्याकृताकाशभागभूतानांदिशांतुभूतसंबंधित्वाभावात्तत्राधिभूतत्वंछत्रिन्याये नेतिवाभूताकाशेऽव्याकृताकाशस्यापिसत्त्वाद्वेतिद्रष्टव्यं । अथाध्यात्मं । आत्मानंदेहमधिकृत्याविद्यमानं । तत्संबंधीतियावत् । पाङ्क्तंनिरूप्यतइत्यर्थः । स्नावेनसहितंअस्थिस्नावास्थि । स्नावेत्यविभक्तिकनिर्देशोवा । एतत् पृथिव्यादिपाङ्क्तषट्कं अधिविधायाधि कृत्य ऋषिर्मुख्यतोवेदद्रष्टाविष्णुरवोचत् । किमवोचदित्यतस्तदेवदर्शयति ॥ पाङ्क्तंवाइदमिति ॥ इदंसर्वं पृथिव्यग्निवाय्वा दिकं पाङ्क्तं पंचत्वसंख्ययोपेतं । तथाचेदंपाङ्क्तं पृथिव्याद्यंपाङ्क्तषट्कं स्वयंहरिःपाङ्क्तेनैव पंचत्वसंख्ययोपेतेननारायणादि रूपेणप्रविष्टःसन्नितिशेषः । स्पृणोतिबलयति स्वस्वकार्यक्षमंकरोतीत्यर्थः । इतिऋषिरवोचदितिसंबंधः । तत्रपृथिव्यग्न्यप्प्राण चक्षुश्चर्मसुनारायणः अंतरिक्षवाय्वोषधिषुव्यानः श्रोत्रमांसेषुवासुदेवः द्व्यादित्यवनस्पत्यपानस्नावेषुसंकर्षणः । दिक्चंद्राकाशे षुउदानवागस्थिषुप्रद्युम्नः । अवांतरदिङ्नक्षत्रात्मसमानत्वङ्मज्जासु अनिरुद्धस्तिष्ठतीतिविवेकोद्रष्टव्यः ॥ १८ ॥ ( अथ

उपा ॥ अग्निर्वायुरादित्यश्चंद्रमानक्षत्राणि । आपओषधयोवनस्पतयआकाशआत्मा । इत्यधिभूतं । अथाध्यात्मं । प्राणोव्यानोपानउदानस्समानः । चक्षु श्रोत्रंमनोवाक्त्वक् । चर्ममांसस्नावास्थिमज्जा । एतदधिविधायऋषिरवोचत् । पांङ्क्तंवाइदंसर्वं । पाङ्क्तेनैवपाङ्क्तंस्पृणोतीति ॥१८॥

भाष्यार्थः) ॥ वेदविद्याभ्यासार्थिनःपूर्वभाविनींप्रणवविद्यामाह ॥ **ॐमितीब्रह्मेतीत्यादिना** ॥ तत्रोंकाररूपाक्षरत्वंब्रह्मादेः कथ्यतइतिप्रतीतिनिवारणायप्रमाणेनैवतद्व्याचष्टे ॥ **ॐनामेति** ॥ विष्णुर्मूलरूपी । अधिकोच्चगुणत्वतइति अकारोकारमकाराख्यवर्णत्रयात्मकोंकारस्यव्याख्यानं । ॐमितीदंसर्वमितिवाक्यंॐकारस्यसर्वजगदभेदःकथ्यतइतिप्रतीतिवारणायव्याचष्टे ॥ **यद्यद्रूपमिति** ॥ अधिकपूर्णत्वा दधिकपूर्णगुणत्वात् । ॐकारस्यभगवद्वाचकत्वोपपादनायप्रवृत्तस्य अग्योश्रावयेत्यादिवाक्यजातस्यतात्पर्यमाह ॥ **तस्मादिति** ॥ अपिशब्दार्थोयं। तस्मादेवेतिसंबंधः । अधिकपूर्णगुणत्वेनोंकारस्यभगवद्वाचकत्वादेवेत्यर्थः । ॐमित्युच्चार्यकेशवमुद्दिश्यस्वकर्माणिकुर्वतीतिसंबंधः । ऋत्विजः अध्वर्यूद्गातृहोतृब्रह्माणः । अन्यथातन्नस्यादितिभावः । इदमुपलक्षणं । अग्निहोत्रकर्तृब्राह्मणावपिग्राह्यौ । तदेवविवृणोति ॥ **अधिकोचेति** ॥ आश्रावयेतिमंत्रंकर्त्रप्रतीतेस्तंदर्शयन्व्याचष्टे ॥ **अधिकोचेति** ॥ ओमित्यस्यार्थःअधिकोच्चेति । श्रावयेतिस्वार्थेणिजितिभावेनोक्तंश्रृणुष्वेति । श्रावयेतिमंत्रानुसारेणश्रृणुष्वेत्यस्यापिमूलरूपंश्रावयेत्यर्थइत्यप्याहुः । आश्रावयतीत्यस्यतात्पर्यमाह ॥ **हीति** ॥ आश्रावमंत्रंपठंतीत्यर्थः। ओमित्यध्वर्युःप्रतिगरंप्रतिगृणातीत्यत्रोक्तःप्रतिगरमंत्रःकइत्यपेक्षायांओधामोदेवेतिप्रतिगरमंत्रमर्थतोनुवदति ॥ **अधिकोचेति**॥ ओधाम ओदेवेतिपदच्छेदः तत्रओइत्यस्यअधिकोच्चेति । धामेत्यस्यार्थः महाधामेति। तेजःस्वरूपंचगृहंप्राज्ञैर्धामेतिगीयतेइति ॥ २२ ॥

---

भाष्यं ॥ ओंनामाभगवान्विष्णुरधिकोच्चगुणत्वत । यद्यद्रूपंभगवतस्तदिदंसर्वमेवच । ओमेवाधिकपूर्णत्वात्तस्माद्यज्ञेषुचर्त्विज. । ओमित्येव स्वकर्माणिकुर्वत्युद्दिश्यकेशवं । अधिकोच्चशृणुष्वेतिहरिमध्वर्युराहहि । अधिकोच्चमहाधाम

वचनाद्धामशब्दस्तेजआद्यर्थः। ओदेवेत्यस्यार्थःसूचदेवेति। देवशब्दोपर्यायोदैवशब्दः। तथाचाधिकोच्चदेवेत्यर्थः। अत्राद्यमोमि तिपदंभगवदधिकोच्चत्ववाचि द्वितीयंतुदेवशब्दोक्तक्रीडादिगुणानामितिद्रष्टव्यं। ओइतिद्विवारपठनाभिप्रायः आदरादिति॥ एनंप्रतीति॥ हरिमुद्दिश्येत्यर्थः। प्रतिगृणाति प्रतिगरमंत्रंपठति। अध्वर्युरितिवर्तते। ओंशोमितिशस्त्राणिशंसंतीत्यत्रकर्त्रप्रतीतेस्तंदर्शयन्किंतच्छस्त्रमित्यपेक्षायांॐशोंशावेतिमंत्रमर्थतोनुवदति॥ शंरूपेति॥ ॐश ॐश अवेतिपदच्छेदः। तत्राद्यस्य ॐमित्यस्यअधिकोच्चेत्युक्तएवार्थोद्रष्टव्यः। अवशिष्टपदार्थमाह॥ शंरूपेति॥ शंरूप अत्युच्चशावनेति भाष्येपदछेदः। तत्रत्यशस्यार्थःशंरूपेति। सुखरूपेत्यर्थः। आद्यमोमितिपदं भगवतःअधिकोचत्ववाचि। द्वितीयंतुसुखस्येतिज्ञातव्यं। अवन रक्षकेत्यर्थः। शस्त्रेषु मंत्रेषुमंत्रविशेषेषु इत्याह इतिभगवंतंसंबोधयतीत्यर्थः। अनेनशंसतीत्यस्यतात्पर्यमुक्तं। ॐमितिसामानिगायंति ॐमितिब्रह्माप्रसौति इतिवाक्यद्वयाभिप्रायमाह॥ तथैवान्येपीति॥ अन्येऋत्विजः उद्गातारोब्रह्माणश्च। ॐमितिब्राह्मणइतिवाक्याभिप्रायमाह॥ एवमिति॥ अध्वर्य्वादिवदित्यर्थः। प्रवक्ष्यन्नित्यस्यार्थोंजसास्वाध्यायकृदिति। आह ॐमित्युच्चार्य स्वाध्यायंकरोतीत्यर्थः। ब्रह्मोपाप्नवानीत्यस्यार्थोब्रह्मप्राप्त्यर्थमिति। स्वाध्यायकृदितिसंबंधः। चशब्दादोमित्युच्चार्यभगवदुद्देशेनैवाग्निहोत्रमनुजानातिकरोति यजमानइत्यस्यसंग्रहः। ब्रह्मैवोपाप्नोतीतिवाक्यमेकवचनात्सन्निहितप्रवचनकर्तुः ब्राह्मणस्यै

---

भाष्यं॥ सूचदेवेतिचादरात्। प्रतिप्रतिगृणात्येनंशंरूपात्युचशावन। इत्याहहोताशस्त्रेपुतथैवान्येपिचर्त्विज.। एवंस्वाध्यायकृच्चाहन्ब्रह्मप्राप्त्यर्थमंजसा।

वफलकथनपरमितिप्रतीतिंवारयन्एकवचनंबहुवचनार्थेइत्यभिप्रेत्यव्याचष्टे ॥ एवंजानंतइति ॥ ओंकारस्यभगवद्वाचकत्वं ज्ञात्वा ओमित्युच्चार्यकर्मकुर्वंतइत्यर्थः । एतेअध्वर्य्वाद्याः । ब्रह्मशब्दस्यानेकार्थत्वादत्रविवक्षितमर्थमाह ॥ तत्परमिति ॥ ब्रह्मेतिबुद्ध्याविविक्तमनुवर्तंते । ततओंकारवाच्यं परंब्रह्मैवप्राप्नुवंतीत्यर्थः ॥ १९ ॥ तथाचायमर्थः । ( अथखंडार्थः ) वेदविद्याभ्यासिनःपूर्वभाविनींप्रणवविद्यामाह ॥ ओमितिब्रह्मेत्यादिना ॥ ब्रह्म भगवान्विष्णुर्मूलरूपी अधिकोच्चगुणत्वतः ओमितिनामा ओंकारवाच्यः।नकेवलंमूलरूपमेवाधिकोच्चगुणत्वेनोंकारवाच्यं किन्नाम यद्यद्भगवतोरूपंमत्स्यादिकं तदिदंसर्वं ओमितिशब्देनोच्यते । अधिकपूर्णगुणत्वादोंकारवाच्यमेवेत्यर्थः । समस्तरूपसहितस्यभगवतःओंकारवाच्यत्वंकुतस्सिद्धमितिचेत् भगवंतमुद्दिश्यकर्मकर्तृभिःअध्वर्य्वादिभिर्नियमेनतदादावुच्चार्यमाणत्वादित्यभिप्रेत्याह ॥ अप्योश्रावयेत्यादिना ॥ अपि तस्मादोंकारस्यभगवद्वाचकत्वादेव भगवदुद्देशेनकर्मकर्तारोध्वर्यवः ओश्रावयेत्याश्रावयंति ओइत्युच्चार्यआश्रावयेत्याश्रावमंत्रं पठंति । अन्यथातन्नस्यादित्यर्थः । एवमुत्तरत्रापिद्रष्टव्यं । यथोक्तंच्छांदोग्ये । ओमित्याश्रावयत्योमितिशंसत्योमित्युद्गायत्येतस्यै वाक्षरस्यापचित्याइति । ननुभगवदुद्देशेनकर्मकर्तृभिरध्वर्युभिःओइत्युच्चार्याश्रावमंत्रपठनेनओइत्यस्यैवभगवद्वाचकत्वंप्राप्तंनत्वोंकारस्येत्यतउक्तं ॥ ओमित्येतदनुकृतीति ॥ ओइत्यंतत् ओमित्येतदनुकृति ओमित्येतदक्षरसरूपं । ओंकारोकारयोरे



---

भाष्यं ॥ एवंजानंतएतेतुप्राप्नुवंत्येवतत्परमितिच ॥ १९ ॥

उप० ॥ ओमितिब्रह्म । ओमितीद ँ सर्वं । ओमित्येतदनुकृतिहस्मवाअप्योश्रावयेत्याश्रावयंति ।

कार्थत्वमेवेत्यर्थः । हस्मवाइतिनिपातत्रयेणेदमतिसुप्रसिद्धमितिद्योतयति । तथाभगवदुद्देशेनकर्मकर्तारःउद्गातारःओमित्युच्चार्यसामानिगायंति उद्गानमंत्रान्पठंति । तथाभगवदुद्देशेनकर्मकर्तारोहोतारः ॐमित्युच्चार्यॐशोंशावेतिशस्त्राणिशंसंति मंत्रविशेषान्पठंति । तथाभगवदुद्देशेनकर्मकर्ताऽध्वर्युरोमित्युच्चार्यओधामोदैवेतिप्रतिगरंप्रतिगृणाति । प्रतिगरसंज्ञमंत्रविशेषंपठति । तथाभगवदुद्देशेनकर्मकर्ताब्रह्माख्यऋत्विक् ओमित्युच्चार्यप्रसौति सोमस्यप्रकर्षेणप्रसवनकंडनंकरोति । तथाभगवदुद्देशेनकर्मकर्तायजमानःॐमित्युच्चार्याग्निहोत्रमनुजानाति अनुतिष्ठतीतियावत् । तथाहं ब्रह्म परंब्रह्मोपाप्नवानि प्राप्नुयामित्यभिप्रेत्यप्रवक्ष्यन् अंजसास्वाध्यायकृत्ब्राह्मणःओमित्याह । ओमित्युच्चार्यस्वाध्यायंकरोतीत्यर्थः । एवमोंकारस्यभगवद्वाचकत्वंज्ञात्वाओमित्युच्चार्यआश्रवादिमंत्रपाठपूर्वकंकर्मकर्तृणामध्वर्य्वादीनांफलमाह ॥ ब्रह्मैवेति ॥ एवंजानंतएतेअध्वर्य्वाद्याःओंकारवाच्यंपरब्रह्मैवोपाप्नोति । एकवचनंबहुवचनार्थे । उपाप्नुवंतिप्राप्नुवंतीत्यर्थः ॥१९॥ (अथभाष्यार्थः) ब्रह्मविद्यामर्थयमानस्यतत्प्राप्त्यर्थंतत्पूर्वभाविनोयमनियमानाह ॥ ऋतंचेत्यादिना ॥ ऋतंचेत्यादेर्वाक्यस्यसाकांक्षत्वादध्याहारेणतावन्निराकांक्षतांदर्शयति ॥ ऋतंचेत्यादिना ॥ सत्यंचेत्यादावप्येवमेवनिराकांक्षताद्रष्टव्येतिभावः । प्रवचनंप्रकृष्टवचनं । साधुभाषणमितियावत् । इतिव्याख्यानमस

उप ॥ ओमितिसामानिगायंति । ओ३शोमितिशस्त्राणिश३संति । ओमित्यध्वर्युःप्रतिगरंप्रतिगृणाति । ओमितिब्रह्माप्रसौति । ओमित्यग्निहोत्रमनुजानाति । ओमितिब्राह्मण प्रवक्ष्यन्नाहब्रह्मोपाप्रवानीति । ब्रह्मैवोपाप्नोति ॥ १९ ॥

भाष्यं ॥ ऋतंचस्वाध्यायप्रवचनेचकर्तव्यानि ।

दितिभावेनप्रवचनशब्दार्थमाह॥**प्रवचनमिति**॥ऋतसत्यशब्दयोःपौनरुक्त्यपरिहारायार्थभेदमाह ॥ **यथार्थेति** ॥ तत्पूर्वकंयथार्थ ज्ञानपूर्वकंयथार्थवचनंसत्यं। तथातत्पूर्वकंयथार्थज्ञानपूर्वकंकरणंकर्मकरणंचसत्यमित्यर्थः।अत्रप्रमाणमाह॥**ऋतमिति**॥तत्पूर्विका यथार्थज्ञानपूर्विका कृतिःकर्मकृतिः। इदमुपलक्षणं।तत्पूर्वकंयथार्थवचनंचेत्यपिग्राह्यं। तपःशब्दस्यसंतापार्थताप्रतीतिवारणायतपः शब्दार्थंप्रमाणशेषेणदर्शयति॥**ध्यानसत्येइति** ॥पूज्यानांगुर्वादीनांपूजा। तथाचध्यानेत्यनेनमानसंतपः सत्येत्यनेनवाचनिकंतपः पूज्यपूजेत्यनेनशारीरंतपः इत्येवंत्रिविधंतपः तपःशब्देनविवक्षितमितिभावः। ननुसत्यंचेत्यादौसत्यादिभिःसहपुनःस्वाध्यायप्रवच नयोःकर्तव्यत्वोक्तिरयुक्ता । ऋतंचस्वाध्यायप्रवचनेचेत्यनेनैववाक्येनतयोःकर्तव्यतायाःउक्तत्वादित्यतः सत्यादौसर्वत्रस्वाध्या यप्रवचनयोरनुषंगेकारणमाह ॥ **सर्वकर्मेति** ॥ सत्यशब्दार्थानुवादोयं । सत्यंतत्पूर्विकाकृतिरित्युक्तत्वात् । इदमुपलक्षणं । तथासत्यतपआद्यनुष्ठानकालेष्वपीत्यर्थः । सर्वत्रसत्यादौ । सर्वकर्मकृतिकालेष्वपिस्वाध्यायप्रवचनयोःकर्तव्यत्वेप्रमाणंचाह ॥ **मंत्रइति** ॥ मंत्रोवेदाध्ययनं अन्यस्यस्वात्मनइतिकर्मणिषष्ठ्यौ। सर्वकर्मसुसर्वकर्मकृतिकालेषु। मंत्रार्थवचनंमंत्रश्चेतीमौकर्तव्यौ। ततः सर्वकर्मसुकर्तव्यत्वात्सर्वकर्मात्मकौसर्वकर्मप्रधानौ । ततएवसत्यादिष्वनुषक्तावित्यर्थः। ननुस्वात्मनोमंत्रार्थवचनमितिप्रमा

---

भाष्यं ॥ प्रवचनंव्याख्यानं । यथार्थज्ञानमृतं। तत्पूर्वकंयथार्थवचनंकरणंचसत्यं । ऋतंयथार्थविज्ञानंसत्यंतत्पूर्विकाकृतिः । ध्यानसत्येपूज्यपूजात- पइत्यभिधीयतइतिशब्दनिर्णये । सर्वकर्मकृतिकालेष्वपिस्वाध्यायप्रवचनयोःकर्तव्यत्वात्तयोस्सर्वत्रानुषंगः । मंत्रोमंत्रार्थवचनमन्यस्यस्वात्मनो- पिवा । सर्वकर्मसुकर्तव्यौसर्वकर्मात्मकौयतइतिकर्मतत्वे ।

णोक्तमयुक्तं। प्रवचनस्यशिष्यसापेक्षत्वेनस्वात्मानंप्रत्येवप्रवचनायोगादित्यतस्तदभिप्रायमाह॥ **आत्मनश्चेदिति** ॥ आत्मनश्चेन्मत्रार्थवचनंविवक्षितं तदामनसैवार्थवचनं युक्तिभिरनुचिंतनात्मकंमननंध्यानंवातदर्थतयाविवक्षितमित्यर्थः। मानुषंचेत्यत्रोक्तमानुषस्यकर्तव्यत्वमप्रतीतेः प्रमाणेनैवव्याचष्टे ॥ **मानुषमिति** ॥ ज्ञानाद्यतिशयेपिनमानुषोधर्मस्त्याज्यइतिभावः ॥ एतदेवाचारेणसमर्थयते॥ **देवाअपीति**॥ मानुषे मानुषदेहंप्राप्तिदशायां। अन्यैःप्रवर्तितव्यमितिकिमुवक्तव्यमित्यपिशब्दार्थः। ऐश्वर्यज्ञानादिहीति देवत्वेदेववच्चेष्टामानुषत्वेचमानुषीत्यादिप्रमाणप्रसिद्धिं दर्शयति। उक्तंचान्यत्रभगवत्पादैःप्रजायतेहियत्कुलेयथायुगंयथावयः। तथाप्रवर्तनंभवेद्दिवौकसांसमुद्भवे। धर्मोहिसर्वविदुषामपिदेवतानांप्राप्तेनरेषुजननेनरवत्प्रवृत्तिः। ज्ञानादिगूहनमुताध्ययनादिरत्रेति। प्रजाप्रजननप्रजातिशब्दान्एकार्थत्वप्रतीतिंवारयन्प्रमाणेनैवव्याचष्टे॥ **प्रजायाइति**॥ पुत्रशिष्यादिरूपप्रजायाइत्यर्थः। तथाचप्रजाशब्देनप्रजारक्षणंग्राह्यमितिभावः। रक्षणंचात्रान्नज्ञानादिदानेनभयादिनिवारणेनचद्रष्टव्यं। पुनःप्रजननंपुत्ररूपेणसंततिकृतिः। पुरुषस्यस्वपितुःसकाशाज्जन्म प्रथमंजननं पुत्ररूपेणजननंचपुनःप्रजननं। पुत्रदेहस्यस्वदेहांशत्वात् आत्मावैपुत्रनामासीति श्रुतेः। तथाचप्रजननशब्देनपुनःप्रजननमेवविवक्षितमितिभावः। प्रजातिशब्दार्थःप्रकृष्टेति। पितुः कर्तरिषष्ठी। पित्रातनयेउपनयनादिकर्मभिःब्राह्मणत्वाख्यप्रकृष्टजातिकरणमित्यर्थः। प्रमाणशेषेणान्वयोद्रष्टव्यः। अत्रकर्तव्यतयोक्तानांऋतस्वाध्याय

---

भाष्यं ॥ आत्मनश्चेन्मनसैवार्थवचनं। मानुषंमानुषोधर्मोदेवाअपिहिमानुषे। मनुष्यवत्प्रवर्ततेनैवैश्वर्यप्रकाशिनइतिच। प्रजायारक्षणंचैवपुनःप्रजननंतथा। प्रकृष्टजातिकरणंकर्मभिस्तनयेपितुरितिच।

प्रवचनसत्यादीनांपरस्परंसाम्यमुततत्रैकस्याधिक्यमितिशंकायांतत्रऋषिमतान्याह ॥ **सत्यमित्यादिना** ॥ तत्रऋषिमतत्रयमपिकिंसमानमित्यपेक्षायांआद्यमतद्वयंसमं तृतीयमतमेवाधिकमितिप्रमाणेनैवदर्शयति ॥ **सत्येतपसीति** ॥ सत्ये यथार्थज्ञानपूर्वकयथार्थवचनादिरूपे।तपसि ध्यानादिरूपे।चीर्णेकृतेसति।तथाचसत्येचीर्णेतपआदिसर्वकर्मकृतंभवतीति सत्येऋततपआदीनामंतर्भावमभिप्रेत्यराथीतरःसत्यस्यैवकर्तव्यत्वमाह। तथातपसिचीर्णेऋतसत्यादिसर्वकर्मकृतंभवतीतितपसिऋतसत्यादीनामंतर्भावमभिप्रेत्यपौरुशिष्टिः तपसएवकर्तव्यत्वमाहेतिभावः। नैवंनाकमतमित्याह ॥ **स्वाध्यायइति** ॥ अंतर्भावः। ऋतसत्यतपःशमदमादीनांसर्वेषामितिशेषः। विशेषतइतिवचनेननपूर्वमतद्वयइवांतर्भावोक्तिरौपचारिकीत्युक्तंभवति। अनेनतद्धितपइतिवाक्यतात्पर्यमुक्तंवेदितव्यं। अतोनाकमतमेवाधिकं। अतएवस्वाध्यायप्रवचनयोःसर्वत्रानुषंगउक्तइतिभावः। ऋतसत्यादेःसर्वस्यस्वाध्यायप्रवचनयोरंतर्भावउक्तस्तत्रश्रुतिंचाह ॥ **यंयंक्रतुमिति** ॥ क्रतुस्तुनिश्चितंज्ञानमितिछांदोग्यभाष्यवचनादत्रनिश्चितज्ञानकरणीभूतंशास्त्रंक्रतुशब्देनग्राह्यं। अधीते अध्यापयतिचेत्यपिद्रष्टव्यं। तथाचयंयंक्रतुंवेदभारतादिरूपंसच्छास्त्रं स्वयमधीते अध्यापयतिप्रवक्तिचान्यान्प्रति तेनतेनाधीतेनशास्त्रेण शास्त्राध्ययनप्रवचनाभ्यामितियावत्। अस्यप्रवचनादिकर्तुःइष्टं सत्यादिशब्दोक्तंयजनादिकंसर्वकर्मकृतंभवतीतिश्रुत्यर्थः। अत्रैवस्मृतिद्वयंचाह ॥ **जप्येनैवेत्यादिना** ॥ जप्येन वेदा

भाष्यं ॥ सत्येतपसिवाचीर्णेसर्वकर्मकृतंभवेत्। स्वाध्यायेचप्रवचनेह्यंतर्भावोविशेषतइतिच ॥ यंयंक्रतुमधीतेतेनतेनास्येष्टंभवतीतिचश्रुतिः। जप्येनैवतुसंसिध्येद्ब्राह्मणोनात्रसंशयः।

दिशास्त्ररूपपाठव्याख्यानरूपजपेनैव । तथाचब्राह्मणः अन्यत्सत्यादिशब्दोक्तंकर्मयद्यपिकुर्यान्नवाकुर्यात् । तथापिवेदादिपाठव्याख्यानरूपजपेनैवसंसिध्येत् अपरोक्षज्ञानादिनामोक्षरूपसंसिद्धिंप्राप्नुयात् । ननुसत्यादिशब्दोक्तकर्माकरणेकथंब्राह्मणइत्यतउक्तंमैत्रइति । कुर्यादित्यादेरत्राप्यन्वयः । मैत्रः मित्वात्रातीतिमित्रनामकसवितृमंडलमध्यवर्तिनारायणदेवताकगायत्रीजापकोमैत्रः । सएवब्राह्मणइत्यर्थः । तथाचात्रसत्यादिशब्दोक्तकर्मणामनावश्यकत्वमभिधायव्याख्यानादिरूपजपस्यैवावश्यकत्वोक्त्यातत्रैवसर्वस्यांतर्भावसिद्धिरितिभावः । जपेत अधीयीत । तस्यतेनकिंचिदकृतंकर्तव्यंनास्ति । सर्वमपिसत्यादिशब्दोक्तंकर्तव्यंकृतमेवभवतीत्यर्थः । नैतावदेव किंतुसंसारान्मुच्यतेचसइत्याह ॥ मुच्यतेचेति ॥ २० ॥ २१ ॥ तथाचायमर्थः ॥ अथखंडार्थः ॥ ऋतंयथार्थज्ञानं । स्वाध्यायप्रवचनेचेत्येतानिकर्तव्यानीतिशेषः । एवमुत्तरत्रापिकर्तव्यपदानुवृत्तिर्द्रष्टव्या । ऋतस्यकर्तव्यत्वंनामसंपाद्यत्वं । सत्यं यथार्थज्ञानपूर्वकंयथार्थवचनं तत्पूर्वकंसत्कर्मकरणंच । तपः ध्यानसत्यपूज्यपूजारूपं । दमः इंद्रियनिग्रहः । शमोबुद्धेःभगवन्निष्ठता । अग्नयः अग्नीनांपूजा अग्नीनामाधानंवा । अग्निहोत्रं तन्नामकंकर्म । अतिथयः

भाष्यं ॥ कुर्यादन्यन्नवाकुर्यान्मैत्रोब्राह्मणउच्यतइतिभारते ॥ सम्यग्ज्ञात्वातुयोविष्णुंव्याख्यायीतजपेतच । नतस्यकिंचिदकृतंकर्तव्यंमुच्यतेचसइतिकर्मतत्वे ॥ २० ॥ २१ ॥

उप ॥ ऋतंचस्वाध्यायप्रवचनेच । सत्यंचस्वाध्यायप्रवचनेच । तपश्चस्वाध्यायप्रवचनेच । दमश्चस्वाध्यायप्रवचनेच । शमश्चस्वाध्यायप्रवचने-च । अग्नयश्चस्वाध्यायप्रवचनेच । अग्निहोत्रंचस्वाध्यायप्रवचनेच । अतिथयश्चस्वाध्यायप्रवचनेच ।

अतिथीनांपूजा । मानुषं स्वस्यज्ञानाधिक्येपिमानुषधर्मप्रवर्तनमेवकार्यनतुज्ञानाद्यैश्वर्यप्रकटनमयोग्येषुकार्यमित्यर्थः । प्रजा शिष्यपुत्रादिरूपा । प्रजारक्षणमन्नज्ञानादिदानेनप्राप्तभयादिनिवारणेनचकर्तव्यमित्यर्थः । प्रजनः पुनःप्रजननं पुत्ररूपेणसंततिकृतिः । प्रजातिः उत्पन्नेतनयेउपनयनादिकर्मभिर्ब्राह्मण्यरूपप्रकृष्टजातिकरणं । अत्रसर्वत्रसत्यादिभिःसहपुनःस्वाध्यायप्रवचनयोःकर्तव्यत्वोक्तिःसत्याद्यपेक्षयाप्यत्यावश्यकत्वज्ञापनार्थेतिद्रष्टव्यं ॥२०॥ अत्रकर्तव्यतयोक्तानांऋतस्वाध्यायप्रवचनसत्यादीनांकिंपरस्परंसाम्यमुततत्रैकस्याधिक्यमितिशंकायांतत्रऋषिमतान्याह ॥ सत्यमितीत्यादिना ॥ सत्यवचाः सत्यवचनएवनिरतोरथीतरस्यापत्यंराथीतरः तन्नामाऋषिः। सत्यमितिनिरुक्तं सत्यमवेश्रेयःसाधनमितितदेवसंपाद्यं । तत्रैवतपआदेःसर्वस्यांतर्भावादित्याह । तपोनित्यः तपोनिष्ठःपुरुशिष्टेरपत्यंपुमान्पौरुशिष्टिः तन्नामाकश्चिदृषिः । तपइतिध्यानादिरूपंतपएवश्रेयःसाधनमितितदेवकर्तव्यं । तत्रैवऋतसत्यादीनामंतर्भावादित्याह । मुद्गलस्यापत्यंतद्गोत्रापत्यंवामौद्गल्योनाकोनामतः स्वाध्यायप्रवचनेएवकर्तव्येइत्याह । कुतइत्यतऋतसत्यतपआदीनांसर्वेषामपिस्वाध्यायप्रवचनयोरेवविशेषतोतर्भावेणतयोरेवमोक्षसाधनेषुप्राधान्यादित्यभिप्रेत्याह ॥ तद्धीति ॥ तत् स्वाध्यायप्रवचनकरणमेवतपः । इदमुपलक्षणं । तद्धिसत्यमपिद्रष्टव्यं । हिशब्देन प्राणायामादयस्तुष्टिपर्यंताद्विगुणाधिकाः । स्वाध्यायोतःकोटिगुणः । तपआद्याःक्रमात्सर्वेउत्तरोत्तरतोधिकाः । अज्ञ

उप० ॥ मानुषञ्चस्वाध्यायप्रवचनेच । प्रजाचस्वाध्यायप्रवचनेच । प्रजनश्चस्वाध्यायप्रवचनेच । प्रजातिश्चस्वाध्यायप्रवचनेच ॥ २० ॥ सत्यमितिसत्यवचाराथीतर । तपइतितपोनित्य पौरुशिष्टि । स्वाध्यायप्रवचनेएवेतिनाकोमौद्गल्य । तद्धितपस्तद्धितप ॥ २१ ॥

स्यश्रवणंश्रेष्ठमयुक्तेर्मननंतथा । ध्यानंनिश्चिततत्वस्यतस्माच्छास्त्रावमर्शनं । वरंदशगुणंतस्मात्व्याख्यैकस्यशतोत्तरेतिप्रमाणप्रसिद्धिंदर्शयति । अतःइदमेवमतंपूर्वमतद्वयापेक्षयाधिकमितिभावः । द्विरुक्तिस्तात्पर्यद्योतनार्था ॥ २१ ॥ ( अथभाष्यार्थः ) पूर्वंऋतादेःसर्वस्मात्स्वाध्यायप्रवचनयोराधिक्यमुक्तं । इदानींतत्फलमाख्यायिकयानिरूपयति ॥ अहंवृक्षस्येत्यादिना ॥ यथाश्रुतप्रतीत्यादिपरिहारायप्रमाणेनैवव्याचष्टे ॥ **संसारेति** ॥ संसरत्यनेनेतिसंसारःलिंगदेहः । रेरिवेत्यस्यार्थःछेत्तेति । रीङ्क्षयइतिधातोः । कीर्तिःपृष्ठंगिरेरिवेत्येतद्व्याचष्टे ॥ **मत्कीर्तिरिति** ॥ पर्वतोपमा पर्वतपृष्ठोपमा विस्तारेणेतिशेषः । यथापर्वताधोभागऊर्ध्वभागापेक्षयाविस्तृतोभवत्येवंमत्कीर्तिरपिसर्वत्रविस्तृतेत्यर्थः । ऊर्ध्वपवित्रइत्यस्यार्थमाह ॥ **अत्युत्कृष्टेनेति** ॥ उन्नतोह्यूर्ध्वउच्यतइतिवचनादूर्ध्वशब्दस्योन्नतत्ववाचित्वात् उन्नतत्वंचात्युत्कृष्टत्वं । अत्युत्कृष्टश्चहरिरेवेत्याशयेनैवंव्याख्यातं । वाजिनीवस्वमृतमस्मीत्येतद्व्याख्यातुंआदौतावद्वाजिनीवसुशब्दार्थमाह ॥ **वाजिरूपश्चेति** ॥ एवंपदार्थमुक्त्वा वाक्यार्थमाह ॥ **तेनामृतोस्मीति** ॥ तेन वाजिनीवसुनाविष्णुना । अमृतं प्रारब्धकर्मशेषनिर्मुक्तोस्मि । सतेजसिसूर्येसंपन्नइतिश्रुतेरित्यर्थः । द्रविणमस्मीतिसंबंधः । प्रसिद्धधनाभेदस्यबाधितत्वात्कथमस्यद्रविणत्वमित्यतस्तत्रहेतुमाह ॥ **नित्यानंदेति** ॥ तथाचनित्यसुखस्यैवमहाद्रविणत्वात्तदभेदकथनंयुक्तमेवेत्यर्थः । सुमेधाश्चास्मीतिग्राह्यं । तेनसमस्तपदव्याख्यानलाभान्न

भाष्यं ॥ संसारवृक्षच्छेत्ताहंमत्कीर्तिःपर्वतोपमा । अत्युकृष्टेनहरिणापावितोस्मियतस्स्फुटं । वाजिरूपश्चनेताचवाजिनीस्सूर्यउच्यते । तत्रस्थोभगवान्विष्णुस्संप्रोक्तोवाजिनीवसुः । तेनामृतोस्मिद्रविणंनित्यानंदस्वरूपत. ।

न्यूनता । अमृतोक्षितइत्येतत्प्रसिद्धामृतेनसिक्तइत्यन्यथाप्रतीतिनिरासायव्याचष्टे ॥ **तेनामृतेनेति** ॥ मरणशून्यतयाऽमृत शब्दवाच्येनविष्णुनेत्यर्थः । तत्सिक्तत्वंनामकीदृशमित्यतआह ॥ **तेनव्याप्तइति** ॥ तेनामृतशब्दवाच्येनविष्णुनाविशेषेणा प्तःप्राप्तः तत्सन्निधानविशेषयुक्तइत्यर्थः इतित्रिशंकोर्वेदानुवचनमित्यादेरर्थमाह ॥ **इत्याहेति** ॥ मानवः वैवस्वतमनुवंशो त्पन्नः । नाम्नात्रिशंकुःहरिश्चंद्रस्यपिता ॥ २२ ॥ **अथखंडार्थः** ॥ आदौतावदहमूर्ध्वेनविष्णुनेत्यादिगीताभाष्यटीकायांऊर्ध्वमूला ध्यायेटीकाकारैर्व्याख्यातत्वात्तदनुसारेणोर्ध्वपवित्रइत्यादिकमादौयोज्यं । तथाचस्वाध्यायप्रवचनादिसंपत्त्याऽपरोक्षज्ञानानंत रमहमादौतावदूर्ध्वेनात्युत्कृष्टेनविष्णुनापवित्रःपावितोऽप्रारब्धसमस्तपापरहितोस्मि । तद्यथैषीकातूलमितिश्रुतेः । तदनंतरंप्रा रब्धकर्मणांभोगेनक्षयेचरमदेहपातानंतरंअर्चिरादिद्वारेणसूर्यलोकंप्राप्यतत्रवाजिरूपश्चनेताचवाजिनीःसूर्यः । तत्रवसतीति वाजिनीवसुस्तेनवाजिनीवसुनाविष्णुना । अमृतंप्रारब्धकर्मशेषनिर्मुक्तश्चास्मि । अधिकारिविशेषाणांतत्रप्रारब्धकर्मशेषमोक्षस्यप्र मितत्वात् । सतेजसिसूर्येसंपन्नोयथापादोदरस्त्वचाविनिर्मुच्यतएवंहैवसपाप्मनाविनिर्मुच्यतइतिश्रुतेः । वैश्वानरेद्युनद्यांवादेहे वासूर्यएववा । विधूयसर्वपापानियातिकिंस्तुघ्नकेशवमितिश्रुतेश्च । अनंतरंसांतानिकलोकेस्थित्वासाधनसंपूर्त्यनंतरंकार्यात्ययेत

---

भाष्यं ॥ तेनामृतेनसिक्तोहंतेनव्याप्तोयतस्सदा । इत्याहमंत्रदृक्पूर्वंत्रिशंकुर्मानवोनृपइतियजुर्विवेके ॥ २२ ॥

उप० ॥ अहंवृक्षस्यरेरिव । कीर्तिं पृष्ठंगिरेरिव । ऊर्ध्वपवित्रोवाजिनीवस्वमृतमस्मि ।

दध्यक्षेणसहविरजांप्राप्यतत्राहंलिंगशरीराख्यवृक्षस्यरेरिवाछेत्ताअस्मि। अनंतरंअभिव्यक्तबहुतरानंदमनुभवन्नेवभगवदुदरेप्रलये स्थित्वापुनःसृष्ट्यनंतरंश्वेतद्वीपप्रादुर्भावेसतितत्रस्थितंअनंतशयनंश्रीनारायणंदृष्ट्वातदिच्छावरकापगमानंतरंतदनुज्ञयायोग्यस्थानंप्राप्यतदनुग्रहेणैवसवर्चसंसप्रभंअनुभूयमानमितियावत् । द्रविणंधनंसुखंचास्मि । सुखस्यैवमहाधनत्वात्। योग्याशेषानंदानुभववानस्मीतियावत्। वर्चसशब्दोऽकारांतोप्यस्ति। ब्रह्महस्तिभ्यांवर्चसइत्यत्रयोगविभागात्समासांतोवा। सवर्चसंद्रविणं सुवर्णमिवाहंजातइतिपूर्वटीकाकाराः। नकेवलंसवर्चसंद्रविणमस्मि किंनाम सुमेधाः सुष्ठुभिव्यक्तंमेधाज्ञानंयस्यासौसुमेधाश्चास्मि। अमृतेन मरणरहितेनविष्णुनाउक्षितःसिक्तोव्याप्तः। तत्सन्निधानविशेषयुक्तश्चास्मीत्येवंमेकीर्तिः स्वाधायप्रवचनजन्ययशोलक्षणा गिरेःपृष्ठमिवपर्वताधोभागवत्विस्तृता। दिगंतविश्रांताजातेत्यर्थः। कस्येदंवचनमित्यप्रतीतेःश्रुतिःस्वयमाह ॥ इतीति ॥ इत्येवंवैवस्वतमनुवंशोत्पन्नस्यहरिश्चंद्रपितुःत्रिशंकोस्तन्नाम्नोराज्ञोवेदानुवचनं वेदप्रवचनजन्यंफलंनिरूपितमित्यर्थः। तथाचाहंवृक्षस्येत्यादौअहं अस्मीत्युक्तास्मच्छब्दविषयोदर्शितइतिज्ञातव्यं ॥ २२ ॥ ( अथभाष्यार्थः ) ॥ ब्रह्मविद्याव्याख्यानानंतरंआचार्येणांतेवासिनंप्रतिशिक्षणीयान्नियमानाह ॥ **वेदमनूच्येत्यादिना** ॥ आचार्योवेदमनूच्य व्याख्यायअंतेसमीपएववसतीत्यंतेवासीशिष्यस्तंअनुशास्तिशिक्षयति। शिक्षाप्रकारमेवाह ॥ **सत्यंवदेति** ॥ सत्यवचननिष्ठोभव। धारकत्वाद्धर्मं भगवंतं चरजानीहि। चरगतिभक्षणयोःगत्यर्थाश्चावगत्यर्थाः। यद्वाधर्ममेवचरआचर। स्वाध्यायात्अधीतात्वेदादिशास्त्रात्

उप० ॥ द्रविणꣳसवर्चसं। सुमेधाअमृतोक्षितः। इतित्रिशंकोर्वेदानुवचनं। वेदमनूच्याचार्योंतेवासिनमनुशास्ति। सत्यंवद। धर्मंचर। स्वाध्यायान्माप्रमदः।

माप्रमदः प्रमादयुक्तोमाभूः । तद्विस्मृतिमान्माभूरितियावत् । यद्वा अनध्यायातिरिक्तदिवसेषुव्याख्यानविषयेप्रमादयुक्तोमा भूरित्यर्थः । आचार्यकुलेवेदाध्ययनानंतरंप्रियंतदभिलषितंयद्धनंतत् आचार्यायआहृत्यदक्षिणात्वेनदत्वा प्रजातंतुं प्रजासंततिं माव्यवच्छेत्सीः माछेदय गृहस्थाश्रमस्वीकारंकुर्वितियावत् । सत्योक्तौधर्माचरणेचतात्पर्यद्योतनायतदुभयविषयेप्रमादोमास्त्वित्याह ॥ सत्यादित्यादिना ॥ कुशलात् उक्तवक्ष्यमाणातिरिक्तात्कुशलरूपात्व्यापारात् । भूत्यै ज्ञानमोक्षाख्यैश्वर्यविषयइतियावत् । नप्रमदितव्यं । यद्वाभूत्यैभूत्या । दैवान्महैश्वर्यप्राप्त्या । तत्प्राप्तावपीतियावत् । उक्तसत्यादिविषयेनप्रमदितव्यमित्यर्थः । देवतोद्देशेनक्रियमाणंकर्तव्यंदेवकार्यसमाराधनादि । पितॄनुद्दिश्यक्रियमाणंकर्तव्यंपितृकार्यश्राद्धादि ताभ्यांनप्रमदितव्यं । मातादेववत्पूज्यायस्यासौमातृदेवः सभव । पितादेववत्पूज्योयस्यासौतथोक्तः । आचार्योदेववत्पूज्योयस्यासौतथोक्तः । अतिथयोदेववत्पूज्यायस्यासौतथोक्तः । तथाच देवपूजादिवत्मात्रादिपूजायांनिरतोभवेत्यर्थः । अनवद्यानिनिर्दुष्टानि तानितान्येव इतराणिसावद्यानि यान्यस्माकंसुचरितानितानिअस्माभिराचर्यमाणानिसमीचीनकर्माणि तान्येव तत्सदृशान्येवत्वयोपास्यानि सेव्यानि कर्तव्यानीतियावत् । नोइतराणि दैवादस्माभिर्देहादौप्रतिबंधकवशेनकदाचित्स्नानादि

उप० ॥ आचार्यायप्रियंधनमाहृत्यप्रजातंतुंमाव्यवच्छेत्सीः । सत्यान्नप्रमदितव्यं । धर्मान्नप्रमदितव्यं । कुशलान्नप्रमदितव्यं । भूत्यैनप्रमदितव्यं । स्वाध्यायप्रवचनाभ्यांनप्रमदितव्यं । देवपितृकार्याभ्यांनप्रमदितव्यं । मातृदेवोभव । पितृदेवोभव । आचार्यदेवोभव । अतिथिदेवोभव । यान्यनवद्यानिकर्माणि । तानिसेवितव्यानि । नोइतराणि । यान्यस्माकꣳ सुचरितानि । तानित्वयोपास्यानि । नोइतराणि ।

कर्तव्यंपरित्यक्तंचेत् त्वयानपरित्याज्यमितिभावः । येकेचब्राह्मणाः अस्मच्छ्रेयांसःअस्मदपेक्षयाज्ञानादिनाअधिकास्तेषांआसनेत्वयानप्रश्वसितव्यं नासितव्यं नोपवेष्टव्यं। यद्वातेषांसतांतत्समक्षमितियावत् । त्वयाआसनेनप्रश्वसितव्यमित्यर्थः । ज्ञानधनादिकंश्रद्धया आस्तिक्यबुद्धिपूर्वकंदेयं। अश्रद्धयापिदेयमेव। गुणभूतश्रद्धाभावेप्रधानंदानंनपरित्याज्यं । गुणप्रधानयोर्विरोधेगुणेत्वन्यायकल्पनमितिन्यायात् । मृगभयात्वीजानावापादर्शनाच्चेतिभावः। श्रियाऐश्वर्यानुसारेण। ह्रियास्वस्यसंपत्तौसत्यामप्यदानेलोकाहसिष्यंतीतिलज्जयावादेयमित्यर्थः । भियाअदानेगुर्वादीनांदंडभयेनपरलोकेयमदंडभयेनवा । संविदा अनादिनिधनोविष्णुःपात्रस्थःपरमेश्वरइतिज्ञानपूर्वकंसत्पात्रेदेयमित्यर्थः । यद्वापात्रापात्रविचारेणेत्यर्थः॥ २३ ॥ मांविहायदेशांतरगतस्यतेयदिकर्मविचिकित्सा वेदादिविहितयज्ञादिकर्मविषयेसंदेहः । वृत्तंतदंगभूतःसदाचारस्तद्विषयेवाविचिकित्सासंशयःस्यात् तत्रतदातत्रदेशेयेब्राह्मणाःतत्रकर्मणितदंगेच संमर्शिनोविचारशीलाः युक्ताःज्ञानाद्युपाययुक्ताः आयुक्ताःस्वधर्माचरणेआग्रहयुक्ताः। अलूक्षाः अरूक्षाः प्रश्नेकृतेसतिकोपरहिताः धर्मकामाः धर्माचरणएवकामवंतः स्युःभवेयुः। तेब्राह्मणाः तत्रकर्मादौयथावर्तेरन्त्वमपितत्रकर्मादौतत्करणविषयेतथैवतदनुसारेणैववर्तेथाः नतुतद्विरोधेनेत्यर्थः । अथानंतरंअभ्याख्यातेषुप्रत्या

उप० ॥ येकेचास्मच्छ्रेयांसोब्राह्मणाः । तेषांत्वयासनेनप्रश्वसितव्यं । श्रद्धयादेयं । अश्रद्धयादेयं । श्रियादेयं । ह्रियादेयं । भियादेयं । संविदादेयं ॥ २३ ॥ अथयदितेकर्मविचिकित्सावावृत्तविचिकित्सावास्यात् । येतत्रब्राह्मणास्संमर्शिनः । युक्ताआयुक्ताः । अलूक्षाधर्मकामाःस्युः । यथातेतत्रवर्तेरन् । तथातत्रवर्तेथा. । अथाभ्याख्यातेषु ।

१ । २४

स्यातेषुवेदनिंदितेषुअधर्मेषु तद्विषयइतियावत् । यदिविचिकित्सास्यादितिवर्तते । येतत्रेत्यादिकमुक्तार्थं । एवमाचार्योंतेवासिनंप्रतिधर्मानुद्दिश्यश्रद्धोत्पादनायाह ॥ एषइति ॥ एषः सत्यंवदेत्यादिः। आदेशः हरेराज्ञा। नकेवलंराजाज्ञावत् हरेराज्ञामात्रमिदं किन्नाम एषःतस्यहरेरुपदेशः ब्रह्मादिपरंपराप्राप्तः। नायमुपदेशोविरोचनंप्रतिब्रह्मोपदेशव त्किन्नाम। एषावेदोपनिषत् सत्यंवदेत्यादिः वेदानांरहस्यं। एषेत्युपनिषच्छब्दापेक्षयास्त्रीलिंगं उपसंहरति ॥ एतदिति॥ एतदनुशासनंशिक्षणं मयात्वांप्रतिकृतमित्यर्थः। एवं मच्छिक्षितप्रकारेणत्वयासत्यवचनादिकमुपासितव्यमनुष्ठेयं। तात्पर्यातिशयद्योतनायपुनःस्वोक्तमवधारयति॥ एवमुचेति॥उचशब्दावेवार्थौ। एवमु एवमेव मदुक्तप्रकारेणैव एतसत्यवचनादिकमुपास्यंअनुष्ठेयमेव नकदाचिदपिआलस्यादिभीरुणापरित्याज्यमित्यर्थः॥२४॥विघ्नपरिहारायआदौयांशांतिंपठित्वाविद्याउपक्रांता समापिताच। तामेवशांतिं ब्रह्मा विघ्नपरिहारायांतेपिपठति॥ **शन्नोमित्रइत्यादिना**॥अक्षरार्थस्तूक्तएव। नन्वत्रोपक्रमे नमस्तेवायोत्वमेवप्रत्यक्षंब्रह्मवदिष्यामीत्युक्तिःउपसंहा

---

उप० ॥ येतत्रब्राह्मणासंसमर्शिनः। युक्ताआयुक्ताः। अलूक्षाधर्मकामा स्युः। यथातेतेषुवर्तेरन्। तथातेषुवर्तेथाः। एषआदेशः। एषउपदेशः। एषावेदोपनिषत्। एतदनुशासनं। एवमुपासितव्यं। एवमुचैतदुपास्यं ॥ २४ ॥ शन्नोमित्रश्शंवरुणः। शन्नोभवत्वर्यमा। शन्नइंद्रोबृहस्पतिः। शन्नोविष्णुरुरुक्रमः। नमोब्रह्मणे। नमस्तेवायो। त्वमेवप्रत्यक्षंब्रह्मासि। त्वामेवप्रत्यक्षंब्रह्मावादिषं। ऋतमवादिषं। सत्यमवादिषं। तन्मामावीत्। तद्वक्तारमावीत्। आवीन्मां। आवीद्वक्तारं। ओंशांतिश्शांतिश्शांतिः॥ २॥ ९॥ इतितैत्तिरीयोपनिषदिप्रथमाशीक्षावल्लीसमाप्ता॥१॥

॥ २९ ॥

रेचत्वामेवप्रत्यक्षंब्रह्मावादिषमित्युक्तिर्नयुज्यते । पूर्वोक्तविद्यासुकुत्रापिवायोरप्रतिपादितत्वादित्यतआह ॥ **संहितायाइति** ॥ संहितायाःयानिपंचाधिकरणानि अधिलोकाधिज्यौतिषाधिविद्याधिप्रजाध्यात्मसंज्ञकानि तदभिमानित्वं तदभिमानिदेवतात्वं प्राणापानादिपंचरूपस्यवायोरपिभवति । तथापृथिव्यंतरिक्षंद्यौर्दिशोवांतरदिशाइत्यादिनोक्तपाङ्क्तत्वं पाङ्क्तषट्काभिमानित्वंच प्राणादिपंचरूपस्यवायोरपिभवति अतःपंचरूपस्यवायोःपंचाधिकरणाभिमानित्वेनपाङ्क्तषट्काभिमानित्वेनचपूर्वंप्रतिपादितत्वा दुपक्रमेत्वमेवप्रत्यक्षंब्रह्मवदिष्यामीत्युक्तिरुपसंहारेत्वामेवप्रत्यक्षंब्रह्मावादिषमित्युक्तिश्चयुज्यतइत्यर्थः ॥ ॥ **इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यश्रीमत्तैत्तिरीयोपनिषद्भाष्यस्यटीकायांश्रीमद्यदुपत्याचार्यपूज्यपादाराधकेनश्रीनिवासेनविरचितायांपदार्थदीपिकायांशीक्षासमाप्ता** ॥ १ ॥ ॥ ॥ ॥ ॥

॥ हरिः ॐ ॥ यद्ब्रह्मविद्याप्राप्त्यर्थंपूर्वंसंपादनीयाविद्यानिरूपिता तामेवविद्यांवरुणायवक्तुंतत्रप्रसक्तविघ्नपरिहारायब्रह्माशांतिं पठति ॥ **सहनाववत्वित्यादिना** ॥ सःमित्रादिः। नौ गुरुशिष्यौ। अवतु रक्षतु। विघ्नात्परिहृत्येतिशेषः। हेति मित्रादेःरक्षणे सामर्थ्यमस्तीतिप्रसिद्धमितिदर्शयति। यद्वानौआवांसहमिलित्वाअवतुरक्षत्वित्यर्थः । समित्रादिर्नौगुरुशिष्यौभुनक्तु अन्नादि

---

भाष्यं ॥ संहिताया. पंचाधिकरणाभिमानित्वंप्राणादिरूपस्यवायोरपिभवति । पृथिव्यंतरिक्षमित्युक्तपाङ्क्तत्वंच । अतउपक्रमोपसंहारयोस्त्वमेवप्रत्यक्षंब्रह्मवदिष्यामित्वामेवप्रत्यक्षंब्रह्मावादिषमितियुज्यते ॥ २५ ॥ इतितैत्तिरीयोपनिषद्भाष्येशीक्षावल्लीसंपूर्णा ॥ १ ॥

उप० ॥ स॒ह ना॑ववतु । स॒ह नौ॑ भुनक्तु । स॒ह वी॒र्यं॑ करवावहै । ते॒ज॒स्विना॒वधी॑तमस्तु॒ मा वि॑द्विषा॒वहै॑ । ॐ शांति॒ः शांति॒ः शांति॑ः ॥ १ ॥

दानेनपालयतु। व्याख्यानादिजनितमौक्तानंदंभोजयत्वितिवा। भुजपालनाभ्यवहारयोरितिधातोः हेतिमित्रादेःभोजनदानेसामर्थ्यप्रसिद्धिमाह। नौआवां सह मिलित्वाभोजयत्वितिवा । आवांगुरुशिष्यौसह मिलित्वा वीर्यंव्याख्यानविषयेप्रयत्नंकरवावहैकुर्वः । लोडुत्तमपुरुषद्विवचनमिदं । नौआवाभ्यांअधीतं तेजस्विवीर्यवत्तममस्तु । आवांतेजस्विनौभवाव । आधीतंफलप्रदमस्तु इत्यर्थइत्यप्याहुः । गुरुशिष्यौआवां माविद्विषावहै विद्वेषंनकरवावहै । नकुर्वःशांतिरितित्रिरुक्तेःप्रयोजनंपूर्वमेवोक्तमनुसंधेयं ॥ १ ॥ ( अथभाष्यार्थः )॥ यदर्थंविघ्नपरिहारिणीशांतिःपठितातामेवब्रह्मविद्यामाह ॥ **ब्रह्मविदाप्नोतिपरमित्यादिना** ॥ अप्रतिपत्तिविप्रतिपत्तिनिरासायादौतावत्ब्रह्मवल्लींप्रमाणेनैवसम्यग्व्याचष्टे ॥ **स्वयोग्यमित्यादिना** ॥ तत्रादौसोश्नुतेइतिवाक्यंव्याचष्टे ॥ **स्वयोग्यमिति** ॥ सइत्यस्यार्थःब्रह्मविदिति । सर्वान्कामानित्यस्यार्थः स्वयोग्यंसुखमेवेति । तद्व्यावर्त्यप्रदर्शनंनेति । अश्नुतइत्यस्यार्थःभुंक्तइति । ब्रह्मणेत्यनूद्यतस्यविरिंचेनपरेणचेत्यर्थद्वयकथनं । सहेत्यनूद्यतस्याभिप्रायउक्तस्तद्वश्यइति । सवाएषपुरुषोन्नरसमयइत्यत्रसवाएषइत्यनेन अन्नात्पुरुषइतिप्रकृतःप्रसिद्धान्नविकारभूतदेहएवपरामृश्यतइत्यसदित्यभिप्रेत्यसइत्यनेन आत्मनआकाशःसंभूतइत्यत्रात्मशब्दोक्तविष्णुरेवपरामृश्यतइतितावत्प्रमाणेनदर्शयति ॥ **यएषइति** ॥ गुणाधिकः अतएवात्मशब्दोक्तइतिशेषः। यथोक्तमनुव्याख्याने। सइत्यात्मपदो

भाष्यं ॥ स्वयोग्यंब्रह्मविद्भुङ्तेविरिंचेनपरेणच । ब्रह्मणासहतद्वश्यस्सुखमेवनदुष्कृतमितिच । यएषभगवान्विष्णुर्भूतस्रष्टागुणाधिकः।

द्विष्टइति । एषइत्यस्यजीवशरीरगतइत्यर्थमभिप्रेत्याह ॥ **सएवेति** ॥ अजातोपिजातइत्यनेन प्रादुर्भावएवहरेर्जनिर्नदेहोत्पत्ति रितिदर्शयति । अतएवोत्तरत्रव्यज्यतइत्युक्तं । इतरानधिष्ठानेनसाक्षात्स्वयमेवजातःकिमित्यतःअन्नात्पुरुषइत्यस्याभिप्राय माह ॥ **अन्नात्मनीति** ॥ अन्नविकारभूतइत्यर्थः । यथोक्तंएषजीवशरीरगइति । सुविवेकिभिरितितृतीयाषष्ठ्यर्थे । साचक र्मणीतिज्ञातव्यं । तथाचसवाएषइतिनप्रसिद्धान्नविकारपुरुषशब्दोक्तदेहपरामर्शः । किंतुआकाशादिपुरुषांतशब्दैर्ब्रह्मणोपिवा च्यत्वमंगीकृतं । तत्तत्क्रियाप्रवर्तकत्वेनब्रह्मणोपिप्रादुर्भावांगीकारात् । तथाचयस्मादात्मनःआकाशादिपुरुषांतमुत्पन्नं सएषःपुरु षशब्दोक्तजीवशरीरगोन्नरसमयइतिपरमात्मपरामर्शांगीकारात् । नचकिमर्थमसौपरामृश्यतइतिवाच्यं । आत्मनआकाशादिकार णत्वमुक्त्वातस्यैवान्नमयादिपंचरूपत्वप्रदर्शनायपुनःप्रक्रांतत्वान्नपरामर्शवैयर्थ्यमितिभावः। यथोक्तंभाष्ये। सवाएषइत्यन्यप्रारंभा दिति। उक्तंचानुव्याख्याने । एवंदेहादिपर्यंतमागतंहरिमेवतु । परामृशतितस्यैवपंचरूपत्ववित्तयइति । यदवादि सवाएषइत्य न्यपरामर्शोनान्नात्पुरुषइत्युक्तदेहपरामर्शइति । तदयुक्तं। आत्मनोदूरोक्तत्वात्देहस्यचसमीपोक्तत्वात्समीपोक्तदेहपरित्यागेनदू रोक्तात्मपरामर्शग्रहणेकारणाभावात्। अन्नात्पुरुषइतिपुरुषशब्देनप्रकृतस्यैवदेहस्यसवाएषपुरुषइतिपुरुषशब्देनोक्तेरात्मनश्चपुरुष शब्देनप्रकृतत्वाभावाच्च । एकेनशब्देनद्विरुक्तेनभेदश्रुतिंविनावस्तुद्वयोक्तिग्रहणायोगादित्याशंकापरिहारायान्नरसमयइत्येतद्व्या चष्टे॥ **अन्नस्यसारभूतोयमिति** ॥ सारेतिरसशब्दार्थः । रसःसारोवरश्चेतिशब्दाएकार्थवाचकाइतिवचनात् । अन्नस्यान्नशब्दा

भाष्यं ॥ सएवान्नात्पुनर्जातोह्यजातोपियतोविभुः । अन्नात्मनिशरीरेसौव्यज्यतेसुविवेकिभिः । अन्नस्यसारभूतोयंशरीरस्यचकेशव. ।

र्थभूतस्यात्तृत्वादेःसारभूतः श्रेष्ठात्ता श्रेष्ठाद्यश्चेत्यर्थः । यथोक्तं महाभोक्तामहाभोग्यइत्यर्थोऽन्नमयेभवेदिति । अन्नरसमयइत्यस्यैवार्थांतरमाह । शरीरस्यसारभूतइति । अन्नविकारस्यशरीरस्येत्यर्थः । अयंभावः । सवाएषपुरुषइतिवाक्येनपरमात्मैवपरामृश्यतेनदेहः । नचतस्यदूरोक्तत्वविरोधःपुरुषशब्देनाप्रकृतत्वविरोधश्चेतिवाच्यं । आकाशादिपुरुषांतशब्दैराकाशादिसारभूतस्यपरमात्मनोपिप्रादुर्भावांगीकारेणसमीपोक्तत्वात्पुरुषशब्देनप्रकृतत्वाच्चपरमात्मपरामर्शोपपत्तेः । नचपुरुषपदेनदेहपरमात्मनोरुभयोरप्युक्तत्वादुभयपरामर्शोयमस्त्वितिवाच्यं । पुरुषशब्दोक्तदेहसारभूतपरमात्मैवदेहंविहायात्रपरामृश्यते । कुतइतिचेत् रसशब्देनविशेषणात् । यथाप्रकृतिंपुरुषंचेतिपुरुषशब्देनजीवेश्वरयोर्द्वयोःप्रकृतत्वेपिदुःखानुभवितृत्वविशेषणेनपुरुषःप्रकृतिस्थोहीतिवाक्येजीवएवोच्यतेनेश्वरः एवमन्नात्पुरुषइत्युभयोःप्रकृतत्वेपिसवाएषपुरुषोन्नरसमयइतिसारान्नमयत्वविशेषणेनपरमात्मपरामर्शएवायमितिज्ञायते । उक्तंच बहूनांसहनिर्देशेएकयाभिधयैवतु । तयैवाभिधयातेषांपरामृश्यैकमुच्यतइति । एतच्चसविस्तरमुक्तमुत्तरप्रस्थाने ब्रह्मशब्दोदितेतस्मिन्नात्मशब्दंप्रयुज्यचेत्यादिना । अन्नमयंप्रत्युदाहृतश्लोकेअन्नाद्वैप्रजाःप्रजायंतइत्यादावन्नशब्देनप्रसिद्धान्नमेवोच्यतइत्यन्यथाप्रतीतिनिरासायान्नशब्दार्थमाह ॥ अन्ननामाचेति ॥ अन्नाभेदेनतच्छब्दवाच्यत्वपरिहारायान्नसंस्थइत्युक्तं । अनेनान्नशब्दस्यहरौरूढिरुक्ताभवति । अर्थांतरमाह ॥ शरीरेष्विति ॥ अन्नविकारभूतेषुशरीरेष्वित्यर्थः । तथाचान्नादित्यस्यान्नविकारशरीरसंस्थाद्धरेरित्यर्थः । उक्तोभवति । प्रसिद्धान्नपरत्वे येन्नंब्रह्मोपासतेइत्यादि

भाष्यं ॥ अन्ननामाचान्नसंस्थश्शरीरेषुचसंस्थितः ।

नोक्तब्रह्मशब्दाद्ययोगइतिभावः । किंचप्रसिद्धान्नेअद्यतेत्तिचेतिवाक्योक्तान्नशब्दनिर्वचनलभ्यार्थायोगइतिभावः । भूताद्यत्वस्यकथंचित्संभवेपिभूतात्तृत्वस्यकथमप्यसंभवइतिभावेनात्तिचभूतानीत्यस्यार्थमाह ॥ **अत्तृत्वादिति** ॥ ननुपरमात्मनोपिकथमन्नशब्दवाच्यत्वं भूतात्तृत्वस्यकथंचित्तत्रसंभवेपिभूताद्यत्वस्यकथमप्यसंभवादित्यतोभूतैरद्यतइत्यस्यतात्पर्यमाह ॥ **उपजीव्यश्चेति** ॥ यथोक्तंभाष्ये । उपजीव्यत्वमेवाद्यत्वमिति । उक्तंचानुव्याख्याने । भोग्यत्वमत्रचाद्यत्वमुपजीव्यतयाहरेरिति । प्रसिद्धान्नपरत्वे अन्नंहिभूतानांज्येष्ठं तस्मात्सर्वौषधमुच्यतइतिवाक्योक्तंसर्वभूतेभ्योज्यायस्त्वंसंसारेदह्यमानानामाश्रयत्वरूपमौषधत्वंचमुख्यतोनसंभवतीत्याशयेनतद्व्याचष्टे ॥ **सज्यायानिति** ॥ तस्मात्ज्यायस्त्वादेव ॥ **संसारइति** ॥ संसरत्यत्रेति संसारोदेहस्तत्रजाठराग्निनादह्यमानानामाश्रयत्वादित्यर्थः । यथोक्तं । ओषधीषुस्थितोविष्णुःक्षुधितैराश्रितोभवेदिति । तथाच उषाःउष्टाःदग्धाः । उषप्लुषदाहइतिधातोः। तेधीयंतेअस्मिन्निति व्युत्पत्तिर्द्रष्टव्या । ननुसवाएषपुरुषोन्नरसमयइत्युक्तान्नरसमयोनविष्णुःकिंतुदेहरूपःकोशएव। कुतः विकाराभिधायकमयट्प्रत्ययप्रयोगात्तस्यचान्नविकारदेहएवसंभवात् विकारशून्येपरमात्मनिचासंभवादित्याशंकायांनात्रमयड्विकारार्थोविवक्षितः किंतुप्राचुर्यार्थएवेत्याह ॥ **प्रचुरमिति** ॥ प्रचुरंप्राचुर्यं । तादात्म्यार्थे विकारार्थेप्राचुर्यार्थेमयट्त्रिधेतिवचनात् । अन्नमयोयज्ञइत्यादौमयटःप्राचुर्येप्रयोगदर्शनाच्चेतिभावः । यथोक्तं । विकारश

---

भाष्यं ॥ अत्तृत्वात्सर्वलोकानामन्नमित्युच्यतेहरिः । उपजीव्यश्चभूतानामितिचान्नंजनार्दनः । सज्यायान्सर्वभूतेभ्यस्तस्मात्सर्वौषधंस्मृतः । संसारेदह्यमानानामाश्रयत्वात्सऔषधं । प्रचुरंमयइत्युक्तंप्रचुरात्तायतोहरिः ।

ब्दान्नेतिचेन्नप्राचुर्यादिति । ननुकथमत्रान्नमयशब्दोन्नप्राचुर्यार्थः । अन्नप्राचुर्यकथनस्याल्पत्वादित्यतआह ॥ प्रचुरात्तेति ॥ इदमुपलक्षणं। प्रचुराद्यइत्यपिग्राह्यं। तथाचप्रचुरात्तापूर्णात्ता। प्रधानात्तेतियावत्। एवंप्रचुराद्यःप्रचुरोपजीव्यश्चेत्यन्नमयइत्यर्थः। नात्रान्नप्राचुर्यस्यान्नमयशब्दार्थत्वायोगः । यतोत्रान्नशब्देनभूतात्तृत्वस्यतदद्यत्वस्यचाभिधानेनाल्पार्थत्वाभावात् । प्रसिद्धान्नार्थत्वएवतत्प्राप्तेरितिभावः । यथोक्तंभाष्ये । अन्नादीनांचप्राचुर्यमेव । अद्यतेत्तिचेतिव्याख्यानात् । तत्प्राचुर्यंचयुज्यतइति । उक्तंचानुव्याख्याने । प्रचुरान्नादिरेवातोह्यन्नमन्नमयेत्यपि । उच्यतइति। किंचनायंमयट्प्रत्ययः । किंनाम प्रचुरवाचीमयशब्द इत्यंगीकृत्यान्नमयइत्यस्यार्थांतरमाह ॥ प्रचुरैरिति ॥ हरिरितिवर्तते । अन्नशब्दवाच्योहरिर्यतोमयैःप्रचुरैःबहुभिःसेव्यते अतोमयसेव्यान्नइतिभाष्ये मध्यमपदलोपेनमयशब्दस्यपरनिपातेनचान्नमयइतिईरितइत्यर्थः । ननुयदिपरिदृश्यमानदेहएव नान्नमयः । किंतुपरमात्मैव कथंतर्हितस्येदमेवशिरइत्यादिप्रत्यक्षनिर्देशोयुज्यते । नचवाच्यमुपनिषद्द्रष्टामुनिःब्रह्मापरोक्षीकृत्य प्रत्यक्षतोनिर्दिशतीति । तथासतितेनापरोक्षीकृतप्राणमयादावपितत्प्रसंगात् निर्देशवैयर्थ्याच्चेत्यतस्तदभिप्रायमाह ॥ देहस्यैवेति ॥ अस्यविष्णोःशिरोदेहस्यशिरसिप्रतिष्ठितमितिसंबंधः । अयंदक्षिणःपक्षः अयमुत्तरःपक्षः इत्यस्यार्थोबाह्वोःपक्षाविति । अस्यविष्णोःपक्षौदक्षिणोत्तरबाहू देहस्यबाह्वोःप्रतिष्ठिताविति लिंगवचनविपरिणामेनसंबंधः । अयमात्मेत्यस्यार्थोम

---

भाष्यं ॥ प्रचुरैस्सेव्यतेनित्यमतोन्नमयईरितः । देहस्यैवशिरस्यस्यशिरोविष्णोःप्रतिष्ठितं । बाह्वो पक्षौतथामध्येमध्यंपश्चात्तनौतथा ।

ध्येमध्यमिति । अस्यविष्णोःमध्यं मध्ये देहस्यमध्येप्रतिष्ठितमितिसंबंधः । इदंपुच्छंप्रतिष्ठेत्यस्यार्थः । पश्चात्तनाविति । एक वचनंद्विवचनार्थे । देहस्यपश्चात्तनौ देहाधोभागयोः पादयोरितियावत् । अस्यविष्णोःपुच्छं पादौप्रतिष्ठितावित्यर्थः।यद्वा देहस्यप श्चात्तनौपादद्वये विष्णोःपुच्छं पादद्वयंप्रतिष्ठितमित्यर्थः । अन्नमयशब्दवाच्यरूपस्यनामविशेषंदर्शयति ॥ इत्येषभगवा निति ॥ एवंचपरिदृश्यमानदेहशिरःपक्षादौ अन्नमयनामकानिरुद्धाख्यभगवच्छिरःपक्षादेःसन्निहितत्वात् वस्त्रप्रावृतजानुनीदं जान्वितिनिर्देशवदिदमितिनिर्देशोयुज्यतेइतिभावः । यथोक्तंभाष्ये । इदमितिचदृश्यमानसन्निहितत्वादिति । उक्तंचानुव्या ख्याने । इदमित्येवनिर्देशोवस्त्रप्रावृतवद्विभोः । शिरआदेर्भवेज्जीवशिरआदौव्यवस्थितेरिति । तस्माद्वाएतस्मादन्नरसमयाद न्योंतरआत्माप्राणमयइत्यादिप्राणमयप्रकरणंव्याचष्टे ॥ तस्यांतरमित्यादिना ॥ तस्यान्नमयनामकानिरुद्धस्य । अन्यइत्य स्यार्थः परमिति । अंतरआत्मेत्यस्यार्थः अंतररूपमिति । अंतरवस्थितंस्वरूपमित्यर्थः । प्राणमयोपिकोशइतिविकल्पंतेतदसदि तिभावेनोक्तंप्रद्युम्नाख्यंप्राणमयमिति । तत्रनिमित्तमाह ॥ प्रणेतृत्वादिति ॥ प्रकर्षेणनेतृत्वादित्यर्थः । नन्वन्योंतरआत्मे त्यादिनान्योन्यमन्यतयोक्तान्नमयादेःकथंपरब्रह्मत्वंयुज्यते । भगवद्रूपेषुभेदाभावादित्यतउक्तं अभिन्नमपिभिन्नवदिति । विशे षबलादितिभावः । यथोक्तमनुव्याख्याने । अभेदेपिविशेषेणैवान्यइत्युदितोहरिरिति । अतएकस्सपंचधा । उक्तइतिच । प्राण मयस्यशिरआदिकंशरीरस्थप्राणापानादौतिष्ठतीतिवक्तुंतस्यप्राणएवशिरइत्यादिकंप्रवृत्तं । तत्प्रद्युम्नाख्यभगवच्छिरआदेःप्राणाद्य

भाष्यं ॥ पुच्छमित्येषभगवाननिरुद्धस्स्वयंहरिः । तस्यांतरंपरंरूपमभिन्नमपिभिन्नवत् । प्रद्युम्नाख्येप्राणमयंप्रणेतृत्वात्प्रकीर्तितं ।

भेदप्रतीतिवारणायव्याचष्टे ॥ **शिरस्तस्येत्यादिना** ॥ तस्यप्राणमयस्यप्रद्युम्नस्य नामतःप्राणशब्दवाच्यमेवेत्यर्थः । उत्तरः पक्षइत्यनुवर्तते । मध्यमंमध्यमशरीरं । पुच्छं पादद्वयं पृथिव्यांस्थितं । ननुप्राणमयस्यविष्णोःशिरआदिकंअध्यात्मप्राणापानादौतिष्ठतीतिकथनप्रसंगेआत्माख्यमध्यदेहपुच्छयोराकाशपृथिवीस्थितत्वोक्तिरसंगतेत्याशंक्यनात्राकाशपृथिवीशब्दाभ्यांप्रसिद्धाकाशपृथिव्यावभिधीयेते किंतुउदानसमानावेवातोनासंगतिरित्याह ॥ **उदानइति** ॥ प्राणमयस्यप्रद्युम्नस्यशिरआदिकं प्राणादिगतं प्राणादिनामकमितिरूढिमाश्रित्योक्तं । इदानींयोगमभिप्रेत्यप्राणादिशब्दान्प्राणमयशिरआदौनिरुच्यदर्शयति ॥ **प्रणेतृत्वादित्यादिना** ॥ विष्णोःप्राणमयस्य । विशेषादित्यनंतरमासमंतादित्यपिग्राह्यं । अपनयेत् परिहरेत् । सव्यःकरः । अवकाशत्वात्अवकाशप्रदत्वात् । अस्यपुच्छं सर्वस्यापिप्रधारणात्पृथिवीत्युक्तमितिसंबंधः । प्राणमयंप्रत्युदाहृतश्लोकेप्राणोहिभूतानामायुरित्युक्तं । तस्यार्थमाह ॥ **सएषइति** ॥ जगतामुत्पत्तिमतांप्राणिनां आयुरायुष्यप्रदः । तस्माद्वाएतस्मात्प्राणमयादित्यादिमनोमयप्रकरणंव्याचष्टे ॥ **तस्मिन्निति** ॥ प्राणमयनामकेप्रद्युम्नेमनोमयनामासंकर्षणस्स्थितइत्यनेनमनोमयस्यापि

---

भाष्यं ॥ शिरस्तस्यप्राणगतंप्राणइत्येवनामत । व्यानाख्योदक्षिण पक्षोव्यानगश्चोत्तरस्तथा । अपानाख्योपानगतआकाशस्थंचमध्यमं । आकाशाख्यंतथापुच्छंपृथ्व्यांपृथिविनामकं । उदानआकाशनामासमानःपृथिवीतिच । प्रणेतृत्वात्प्राणनामशिरोविष्णोःप्रकीर्तितं । विशेषाच्चेष्टयेद्यस्माद्व्यानाख्योदक्षिण करः । यस्मादपनयेद्दोषानपानस्सव्यउच्यते । आकाशस्त्ववकाशत्वान्मध्यदेहोमहात्मनः । पृथिवीपुच्छमस्योक्तंसर्वस्यापिप्रधारणात् । सएषजगतामायुस्तस्मिन्संकर्षणस्स्थित ।

कोशत्ववचनंपरास्तंवेदितव्यं । तस्ययजुरेवशिरइत्यादौमनोमयनामसंकर्षणाख्यभगवच्छिरआदेर्यजुराद्यभेदप्रतीतिवारणाय यजुरादिशब्दान्मनोमयनामकभगवच्छिरआदौयोगरूढिभ्यांव्याख्याति ॥ **शिरस्तस्येत्यादिना** ॥ तस्यमनोमयनामकस्यसंकर्षणस्य । यज्ञानांहरणात् यज्ञसंबंधिभागस्वीकारादित्यर्थः । यजुःसंस्थंचेत्यादिनातत्रतत्रस्थितत्वोक्त्यारूढिरुक्तेतिज्ञातव्यं । यजुर्वेदादौप्रतिपाद्यतयास्थितमित्यर्थः । अर्चनायाःपूजायाः । दोषात् दोषवत्त्वेन । सर्वाभक्तस्वरूपस्यसमीकृतेः साम्यकरणादित्यर्थः । यद्वादोषादितिल्यब्लोपनिमित्तापंचमी । दोषपरिहारंविधाय निर्दोषत्वेनेतियावत् । सर्वभक्तस्वरूपस्यसाम्यकरणादित्यर्थः । दोषाच्छमीकृतेरितिक्वचित्पाठः । तत्रभक्तानांदोषात्शांतिकरणात्परिहारकरणादित्यर्थोद्रष्टव्यः । आदेशआत्मेत्यस्यार्थः पंचरात्रगतंपंचरात्रप्रतिपाद्यं मध्यंमध्यांगं आदेशाख्यमितिपंचरात्रेआदेशशब्दंनिर्वक्ति ॥ **सुविस्तृतेरिति** ॥ बुध्याविवेकेनपंचरात्रमित्यनुवर्तते । उपदेशरूपत्वादितिशेषः । तथाचभगवद्गुणसुविस्तृतेरुपदेशरूपत्वात्पंचरात्रमादेशाख्यमितिसंबंधः । यद्वापंचरात्रगतमितिआदेशशब्दस्यरूढिमुक्त्वासुविस्तृतेरत्यंतंविस्तृतत्वादादेशाख्यमितियोगप्रदर्शनपरत्वेनव्याख्येयं । अथर्वांगिरसस्थितत्वादथर्वाख्यमथर्वांगिरसशब्दवाच्यमित्यर्थः । ऋषिद्वयदृष्टभागद्वयोपेतोऽथर्वणवेदएवाथर्वांगिरसशब्देनोच्यतइतिसंप्रदायविदः । अधरंचेत्यत्रचशब्दात्वर्तयतीत्यस्यांऽगिरसइत्यस्यचसंग्रहः । तथाचाधरंपातालादिस्थं

भाष्यं ॥ शिरस्तस्ययजुर्नामयज्ञानांहरणात्स्मृतं । यजुस्संस्थंचबाहूतुऋक्सामांतस्स्थितौसदा । ऋगर्चनायास्स्वीकारात्सामदोषात्समीकृतेः । पंचरात्रगतंमध्यमादेशाख्यंसुविस्तृते. । अथर्वाख्यंतथापुच्छमधरंचांगिनांरसः ।

प्राणिजातंवर्तयतीत्यथर्वाख्यमित्यर्थः । धकारस्यथकारोनिर्वचनादित्यवगंतव्यं । अंगिनांप्रधानानांदेवानांसकाशात्रसःसारो वरइतिहेतोरंगिरसइत्यर्थः । यतोवाचोनिवर्तंतेइत्यादेस्तात्पर्यं **मनोवाचामगम्यंतमिति** । साकल्येनेतिशेषः । आनंदंब्रह्मणो विद्वानित्यत्रआनंदंब्रह्मणइत्युक्त्याप्राप्तभेदशंकांपरिहरति ॥ **ज्ञात्वानंदस्वरूपिणमिति** ॥ विशेषबलात्तथाव्यवहारइति भावः । नबिभेतिकदाचनेत्यस्यार्थःकुतश्चिदिति । तस्माद्वाएतस्मान्मनोमयादितिविज्ञानमयप्रकरणंव्याचष्टे ॥ **वासुदेवइत्यादिना** ॥ ततोंतरः । मनोमयनामकेसंकर्षणेस्थितः । अनेनविज्ञानमयोपिकोशइत्यपास्तं । तस्यश्रद्धैवशिरइत्यादौविज्ञानमयनामकवासुदेवाख्यभगवच्छिरआदेःश्रद्धाद्यभेदप्रतीतिनिरासायश्रद्धादिशब्दान्विज्ञानमयनामकभगवच्छिरआदौयोगरूढिभ्यांव्याख्याति ॥ **श्रद्धाख्यमिति** ॥ श्रद्धेत्यास्तिक्यबुद्धिरुच्यते भारतीवा । श्रद्धायांस्थितंतच्छिरःश्रुतिधर्तृत्वाच्छ्रुतिधारकत्वाच्छ्रद्धाख्यमित्यनेनरूढियोगौदर्शिताविति ज्ञातव्यं । ऋतस्थः यथार्थज्ञानस्थः । नियामकइतिचशब्दार्थः । सर्वलोकस्यात्रैवमध्यदेहएवयोगात् आश्रितत्वेनसंबंधादित्यर्थः । पुच्छमित्यनंतरं महःसंस्थं महःसूर्यादितेजःपुंजंतत्स्थमित्यपिद्रष्टव्यं । महनीयत्वतःपूज्यत्वतः । महपूजायामितिधातोः । तस्माद्वाएतस्माद्विज्ञानमयादित्यानंदमयप्रकरणंव्याचष्टे ॥

भाष्य ॥ मनोवाचागमम्यंतंज्ञात्वानंदस्वरूपिणं । कुतश्चिन्नबिभेत्येववासुदेवोंतरस्ततः । श्रद्धाख्यंश्रुतिधर्तृत्वाच्छ्रद्धायांतच्छिरस्स्थितं । ऋतंज्ञानततेदोर्ताचर्तस्थोदक्षिण कर । वामस्सत्यस्थितस्सत्यंसतांयस्मान्नियामक । योगाख्यंसर्वलोकस्ययोगादत्रैवयोगगं । मध्यंपुच्छंमहोनाम महनीयत्वतस्सदा ।

**तस्मिन्नित्यादिना** ॥ तस्मिन्विज्ञानमयनामकेवासुदेवे । आनंदरूपइत्यनेनमयटस्तादात्म्यमर्थइत्युक्तंभवति । नारायणइत्यनेनानंदमयस्यापिकोशत्वोक्तिःपरास्तेतिज्ञातव्यं। तस्यप्रियमेवशिरइत्यादौआनंदमयनामकनारायणाख्यभगवच्छिरआदेःप्रियाद्यभेदप्रतीतिवारणायप्रियादिशब्दानानंदमयनामकभगवच्छिरआदौयोगरूढिभ्यांव्याख्याति॥ **शिरःप्रियेस्थितामित्यादिना** ॥ प्रियेवस्तुनि परेयं परैः संसारिविलक्षणैर्मुक्तैरुत्तमैर्वाइयंप्राप्यमित्यर्थः । परेतिप्रशब्दार्थः । प्रकारस्थाकारलोपः । बाहूमोदप्रमोदौ अपकृष्टप्रकृष्टविषयोत्थावानंदौ मोदप्रमोदौ । तयोःसंस्थितावितिशेषः । आनंदः स्वरूपभूतः । तत्रसंस्थंमध्यं । आततत्वतोनिमित्तादानंदइत्युच्यतइतियोज्यं । पुच्छंपादद्वयंतु सृष्ट्यापृथिव्यादिलोकान्बृंहयेद्यतोतोब्रह्मेत्युच्यतइत्यर्थः । यद्वातुशब्दःसृष्टौविशेषद्योतकः । तथाचभक्तानांसृष्ट्यामुक्तिसृष्ट्यामोक्षदानेनेतियावत् । बृंहयेत् ज्ञानानंदौबृंहयेद्यतोतःपुच्छंपादद्वयंब्रह्मेत्युच्यतइत्यर्थः । यथोक्तंबृहद्भाष्ये । स्वित्यानंदःसमुद्दिष्टोवरितिज्ञानमुच्यते । मुक्तिदानेनतद्दानात्सुवरस्यपदद्वयमिति । अथकस्मादुच्यतेब्रह्मेति बृहतिबृंहयतिचेतिश्रुतिरितिभावः । रूढिमप्याह ॥ **प्रधानवायाविति** ॥ देहसंस्थे मुख्यवायावित्यर्थः । तस्यैषएवशारीरआत्मायःपूर्वस्येत्यत्रान्नमयप्राणमयादीनांशरीरशरीरिभावोक्त्याभेदो नियम्यनियामक

---

भाष्यं ॥ तस्मिन्नानंदरूपोसौस्थितोनारायणस्सदा । शिर प्रियेस्थितंतस्यपरेयंप्रियनामकं । मोदप्रमोदयोर्बाहूमोदनाच्चप्रमोदनात् । मोदप्रमोदनामानावानंदस्त्वातततत्वतः । मध्यमानंदसंस्थंचब्रह्मसृष्ट्यातुबृंहयेत् । पुच्छंप्रधानवायौचब्रह्माख्येसंस्थितंसदा ।

भावादिरूपोविशेषश्चप्रतीयते तदयुक्तं। एकमेवेत्यादिश्रुतिविरोधादित्यतआह ॥ **अभेदोपीति** ॥ भेदरहितोपीत्यर्थः । अविशेषोपि नियम्यनियामकभावादिविशेषरहितोपीत्यर्थः । इंद्रार्जुनादिवद्विशेषरहितोपीत्यर्थइतिपूर्वटीकाकाराः । परमैश्वर्य योगतइत्युपलक्षणं । विशेषबलाच्चेतिद्रष्टव्यं । कोदेहव त्कश्चदेहिवदित्यतआह ॥ **बहिःस्थइति** ॥ अन्नमयादिरित्यर्थः । अंत स्थितःप्राणमयादिः । ननुयथाअस्मदादीनांदेहसंबंधंविनाबहिःस्थिताश्माद्यादानेअसमर्थत्वाद्देहसंबंधोऽपेक्षितः एवंप्राणमया दिरूपस्यहरेरप्यन्नमयादिरूपदेहसंबंधंविनाबहिःस्थितवस्त्वादानेऽसमर्थत्वाद्देहित्वंकिमित्यपेक्षायामाह ॥ **अंतर्व्याप्तीति** ॥ अन्नमयाद्यंतर्व्याप्तिविशेषेणैवहरिर्देही बहिःस्थितत्वमात्रेणैवान्नमयादेर्देहत्वमित्यपिद्रष्टव्यं । बहिर्बहिष्ठवस्तुविषये तदादानादा वितियावत् । अशक्तत्वतोदेहीजातइतितुनेत्यर्थः । प्राणमयादिप्रकरणचतुष्टयगतस्यसवाएषपुरुषविधएवेत्यस्यार्थमाह ॥ **सर्वे पीति** ॥ प्रकरणचतुष्टयगतस्य तस्यपुरुषविधतांअन्वयंपुरुषविधइत्यस्यतात्पर्यमाह ॥ **उत्तरादिति** ॥ उत्तरा दानंदमयादेःस काशा त्पूर्वस्य विज्ञानमयादेः संभवःप्रादुर्भावोभवतीत्यर्थः । नारायणादिरूपैर्वासुदेवादिरूपाणामभिव्यक्तिरितिभावः । प्रकरणचतुष्टयगतस्य तेनैषपूर्णइत्यस्यार्थमाह ॥ **उत्तरैरिति** ॥ पूर्वेसर्वशःसर्वे विज्ञानमयादयः उत्तरैरानंदम यादिभिर्निश्छिद्रत्वेननिश्छिद्रतया निरवकाशतयेतियावत् । पूरिताःपूर्णाइत्यर्थः । स्पष्टमन्नमयादिशब्दार्थानाह ॥



भाष्यं ॥ अभेदोप्यविशेषोपिपरमैश्वर्ययोगतः । देहदेहिवदेवासौपंचधावस्थितोहरिः । बहिस्स्थोदेहवद्विष्णुरंतस्स्थोदेहिवत्स्मृतः । अंतर्व्याप्ति विशेषेणनत्वशक्तत्वतोबहिः । सर्वेपिपुरुषाकाराउत्तरात्पूर्वसंभव । उत्तरैःपूरिता पूर्वेनिश्छिद्रत्वेनसर्वशः ।

॥ **अत्तृत्वंचेत्यादिना** ॥ चशब्देनाद्यत्वसंग्रहः । अत्तृत्वमद्यत्वंचान्नशब्दार्थः । प्राणशब्दार्थःप्रणेतृत्वं । मनुअवबोधनेइतिधातोःबोधोम( नइश )नोमयशब्दार्थः । विज्ञान( मय )शब्दार्थेविविधवेत्तृतेति । तत्रवीत्यस्यार्थोविविधेति । ज्ञानशब्दार्थोवेत्तृतेति । मयटामर्थःपूर्णाइति । नन्वन्नमयादीनांपंचानामपिप्रत्येकमत्तृत्वादिसर्वगुणोपेतत्वेनप्रत्येकमन्नमयादिसर्वनामकत्वात्कथमन्नमयादीनांप्रत्येकमत्तृत्वादिगुणोक्तिस्तत्प्रयुक्तान्नमयादिनामभेदश्चेत्यतआह ॥ **अत्त्यादिदास्तइति** ॥ अपि यद्यपि प्रत्येकंतेसर्वेसर्वगुणाः अत्तृत्वादिसर्वगुणवंतः तथापिप्रत्येकंअत्त्यादिदाः स्वोपासकानांरुद्रादीनामत्तृत्वादिदाः स्वस्यतदभावेपरस्मैतद्दानानुपपत्तेरितिन्यायेनाऽत्तृत्वाद्युपेताइतियावत् उच्यंते ततःस्वोपासकानामत्तृत्वादिगुणदातृत्वादेवसर्वनामवतामपिनामभेदःउपनिषदुक्तःउपपद्यतइतिभावः । असन्नेवसभवति असद्ब्रह्मेतिवेदचेदित्यस्यार्थमाह ॥ **पंचरूपंचेति** ॥ असदित्यस्यार्थोजीवादन्यन्नविद्यतइति । ततश्चदुःखीतियावत् । अभाववाचकाःशब्दाःसर्वेतेदुःखवाचकाइतिगीतातात्पर्यवचनात् । असन्नेवसभवतीत्यस्यतात्पर्यमाह । तेऽसंतइति दुःखिनइत्यर्थः । तत्रहेतुस्तमआलयाइति । तमआलयः अंतेआश्रयोयेषांतेतथा । तमसिआसम्यक्लयोयेषांतेतथा । तमसिमग्नाइत्यप्याहुः । यतइतिशेषः । यतोऽतस्तेऽसंतइतिसंबंधः । अस्तिब्रह्मेतिचेद्वेदेत्यस्यार्थमाह ॥ **जीवादन्यदिति** ॥ ततश्चसुखीतियावत् । सद्भाववाचिनःशब्दाःसर्वेतेसुखवाचकाइतिवचनात् ।

भाष्यं ॥ अत्तृत्वंचप्रणेतृत्वंबोधोविविधवेत्तृता । आनंदश्चयत पूर्णस्ततोन्नादिमयास्स्मृताः। अत्त्यादिदास्तेप्रत्येकंसर्वेसर्वगुणाअपि । नामभेदस्तस्तूक्तस्सर्वनामवतामपि । पंचरूपंचतद्ब्रह्मजीवादन्यन्नविद्यते । इतियेतुविजानंतितेऽसंतस्तमआलयाः । जीवादन्यत्परंब्रह्मपंचरूपंचयेविदुः ।

संतमेनंततोविदुरित्यस्यार्थःसंतस्तइतीति । संतः सुखिनइत्यर्थः । तत्रहेतुःमोक्षयोग्याहीति । हियस्मात्ध्रुवंनिश्चयेनमोक्षयोग्या स्तस्मात्संतस्तइतिविज्ञेयाइतिसंबंधः ॥ २—१२ ॥ ततश्च ॥ **ब्रह्मविदाप्नोतिपरमित्यादेरियमक्षरयोजना** ॥ अन्यविद्याया अन्यगतेरयुक्तत्वाद्ब्रह्मवित् परब्रह्मवित्परंब्रह्माप्नोति । ननुतत्परंब्रह्मकिंलक्षणकं । नहिलक्षणेनविनावस्तुस्वेतरसमस्तव्यावृत्ततयाशक्यतेज्ञातुं। कुत्रचतद्वेदनं किंहृदि तदन्यत्रवा काचतत्प्राप्तिः किंतदैक्यापत्तिरूपाउततत्समीपंप्राप्यभोगानुभवरूपावेतिशंकायामाह ॥ **तदेषेति** ॥ तदेतच्छंकात्रयं अभिप्रति तदुत्तरत्वेनेतियावत् । एषावक्ष्यमाणा ऋक्मंत्रवर्णरूपा उक्ताउच्यतइत्यर्थः । तमेवमंत्रवर्णमुदाहरति ॥ **सत्यमित्यादिनाविपश्चितेत्यंतेन** ॥ तत्राद्यप्रश्नोत्तरं ॥ **सत्यमिति** ॥ द्वितीयतृतीयप्रश्नोत्तरमाह ॥ **योवेदेति** ॥ योधिकारीगुहायां हृदयगुहायां परमे व्योमन् व्योम्नि दहराकाशे निहितंसत्यत्वादिविशिष्टंपरब्रह्म वेद सब्रह्मवित्अधिकारीसर्वान्कामान्स्वयोग्यानानंदादीन्विपश्चिताब्रह्मणाविरिंचेनपरेणचसहतद्वश्यःसन्अश्नुते भुङ्क्तइत्यर्थः । अनेनहृदितद्वेदनं तत्प्राप्तिश्चतत्समीपंप्राप्यतदधीनतयाभोगानुभवरूपेत्युक्तंभवति। इतिशब्दोमंत्रवर्णसमाप्तिद्योतकः ॥ २ ॥ इतःपरंमंत्रवर्णोक्तसत्यत्वादिविस्तृतिरेव तस्माद्वाएतस्मादित्यादिनोत्तरग्रंथेनक्रियते। यथोक्तमनुव्याख्याने । अतोहिमंत्रवर्णोक्तविस्तृतिस्तुसमस्तया । क्रियतेपरयायस्मादिति । तत्रसृष्टिप्रकरणेनान्नमयप्राणमयप्रकरणाभ्यांचसत्यत्वंविव्रीयते ।



भाष्यं ॥ संतस्तइतिविज्ञेयामोक्षयोग्याहितेध्रुवं ॥

उप०॥ॐब्रह्मविदाप्नोतिपरं। तदेषाभ्युक्ता।सत्यंज्ञानमनंतंब्रह्म। योवेदनिहितंगुहायांपरमेव्योमन् । सोश्नुतेसर्वान्कामान्सह। ब्रह्मणाविपश्चितेति ॥२॥

तथाहि । सद्भावेसाधुभावेचसदित्येतत्प्रयुज्यतइतिवचनात्सद्भावशब्देनप्रजननंसूचितमितिगीताभाष्योक्तेश्च सत्सद्भावं प्रजन
नंयापयतिप्रापयतीतिसत्यं । तथासत् सत्त्वंजीवनं विशीर्णतापरपर्यायंसंहारंचयापयतीतिसत्यं । अन्नशब्दार्थोप्ययमेव । जीवन
प्रदातृतयोपजीव्यत्वाख्याद्यत्वात् विशीर्णताप्रदातृतयासंहर्तृत्वाख्यात्तृत्वात् तयोरेवान्नशब्दार्थत्वात् । तथाप्राणंदेवाअनुप्राणं
तीत्यादिनाप्राणमयप्रकरणेनगतिजीवनप्रदातृत्वयोरुक्तत्वात् । सदितिधात्वर्थोपिगतिः । अस्तिदेवदत्तइत्युक्तेजीवतीतिप्रतीते
र्जीवनंचासधात्वर्थोतस्तत्प्रदातृत्वस्यापिसत्यशब्दार्थत्वात्सत्यत्वंप्राणत्वंचैकमेव । तथासामान्यविशेषज्ञानत्वरूपंज्ञानत्वलक्षणं
मनोमयविज्ञानमयप्रकरणाभ्यांविव्रियते । मनुधातोरवबोधार्थत्वात् । देशतःकालतःआनंदादिगुणतश्चपरिच्छेदशून्यत्वरूपमनं
तत्वंचानंदमयप्रकरणेननावशिष्टवाक्यैश्चविव्रियते । उक्तंचसूत्रकृता । मांत्रवर्णिकमेवचगीयतइति । उक्तंचभाष्ये । ब्रह्मविदा
प्नोतिपरमितिसूचयित्वा सत्यंज्ञानमनंतंब्रह्मेतिमंत्रवर्णेलक्षितंपरमेवब्रह्म शब्दानुसंधानाद्गीयतेइति । उक्तंचैतत्सर्वमनुव्याख्या
नेपि । ब्रह्मवित्परमाप्नोतीतियत्प्रथमसूचितं । तदेषमंत्रवर्णेनसत्यंज्ञानमनंतवत् । लक्षितंतत्रसत्यत्वंसृष्ट्यान्नप्राणयोरपि । उक्तं
ज्ञानंतुमनसाविज्ञानेनाप्युदीरितं । अनंतत्वंतथानंदमयवाचाप्युदाहृतं । सद्भावंयापयेद्यस्मात्सत्यंतत्तेनकथ्यते । इतिसृष्टिरि
हप्रोक्ताजगत्सद्भावयापकं । ब्रह्मेतिस्थापनायैवसत्त्वंजीवनमेवच । विशीर्णताचसत्त्वंस्यात्सन्नमित्याहुरेवयत् । अतोद्यतात्तृता
न्नत्वंसत्यशब्दार्थएवहि । प्राणंदेवाअनुप्राणंतिमनुष्याःपशवश्चये । आयुःप्राणोहिभूतानामितियद्गतिजीवने । उक्तेसदिति
धात्वर्थोगतिश्चातोहिसत्यता । प्राणत्वमवबोधार्थोमनुधातुःप्रकीर्तितः । नाल्पेसुखमितिप्रोक्त्यैवानंदमयतोक्तितः । अनंतत्वंसु

श्रितोभवेत् । पुरिशेतेयतःसोथपुरुषश्चनिगद्यतेइति ॥ ३ ॥ एवंपुरुषशब्दोक्तदेहपर्यंतमागतस्यहरेरन्नमयादिपंचरूपत्वज्ञापनायपुनःप्रारंभंकरोति ॥ **सवाइति** ॥ सः भूतस्रष्टृतयाआत्मपदोद्दिष्टः एषः जीवशरीरगः पुरुषः परमात्मा अन्नरसमयः सारान्नमयः अन्नशब्दार्थभूताद्यत्वात्तत्वप्रचुरः । प्रचुरात्ताप्रचुरोपजीव्यश्चेत्यर्थः । अयंचान्नमयोनिरुद्धः । अस्यनिराकारतापरिहारायान्नमयनामकानिरुद्धस्योपास्त्यर्थंअवयवसंस्थितिप्रकारमाह ॥ **तस्येति** ॥ तस्य जीवशरीरगतस्यान्नमयनामकानिरुद्धस्य शिरः इदं अस्मिन्जीवशरीरस्यशिरसिवर्तते । दक्षिणःपक्षः दक्षिणबाहुः । अयमेतच्छरीरस्यदक्षिणबाहौतिष्ठति । उत्तरःपक्षःसव्यबाहुः । अयमेतच्छरीरस्यसव्यबाहौवर्तते । आत्मामध्यदेहः अयमेतच्छरीरस्यमध्यदेहेस्ति । पुच्छं । लांगूलत्वभ्रांतिवारणायतस्यैवार्थमाह । प्रतिष्ठेति । प्रतितिष्ठत्याभ्यामितिप्रतिष्ठापादौ । इदं एतच्छरीरस्यपादयोस्तिष्ठतीत्यर्थः । एवमुत्तरत्रापिपुच्छंप्रतिष्ठेत्यस्यार्थोद्रष्टव्यः ॥ ४ ॥ अन्नमयनामकानिरुद्धस्यसर्वप्रजास्रष्टृत्वादिरूपंमहिमानंश्लोकेनवक्तुंप्रतिजानीतेउपनिषद्द्रष्टामुनिः ॥ **तदपीति** ॥ तदपितत्रापि अन्नमयनामकानिरुद्धस्यसमस्तप्रजास्रष्टृत्वादौ एषवक्ष्यमाणःश्लोकोपिप्रमाणत्वेनभवतीत्यर्थः । तमेवश्लोकंपठंति ॥ **अन्नाद्वैप्रजाइत्यादिना** ॥ अत्रसर्वत्रान्नशब्दोन्नमयपरोद्रष्टव्यः । अन्नादन्नमयनामकादनिरुद्धात् । कास्ताःप्रजाइत्यतआह ॥ **याःकाश्चेति** ॥ श्रिताःआश्रिताः तत्रस्थाइतियावत् । नकेवलंसृष्टिकर्तृत्वमात्रं किन्नामस्थितिकर्तृत्वंचे

---

उप० ॥ सवाएषपुरुषोन्नरसमयः । तस्येदमेवशिरः । अयंदक्षिणःपक्षः । अयमुत्तरःपक्षः । अयमात्मा । इदंपुच्छंप्रतिष्ठा ॥ ४ ॥ तदप्येषश्लोकोभवति । अन्नाद्वैप्रजाःप्रजायंते । या.काश्चपृथिवीश्रिताः ।

त्याह ॥ अथोइति ॥ सृष्ट्यनंतरंजीवंति । प्रजाइतिवर्तते । संहारकर्तृत्वंचाह ॥ अथेति ॥ स्थित्यनंतरं अंततःप्रलये प्रजाःएनत् अन्नमयनामकानिरुद्धमपियंतिप्राप्नुवंति । महिमांतरमाह ॥ अन्नंहीति ॥ हियस्मादन्नमयन्नामकानिरुद्धोभूतानाभूतेभ्यो ज्येष्ठं ज्यायान् तस्मात्ज्यायस्त्वादेवसर्वौपधमुच्यते शरीरेजाठराग्निनादग्धानामन्नेस्थितत्वादाश्रयइत्युच्यते । एवमन्नमयनामकानिरुद्धोपासकस्यफलमाह ॥ सर्वमिति ॥ येऽधिकारिणःअन्नंहिभूतानांज्येष्ठमित्यादिनाप्रकारेण तथाभूतैरद्यतेउपजीव्यते भूतानिअत्तिचयतः तस्मा त्तत् अनिरुद्धनामकरूपमन्नमुच्यतइत्येव मन्नं अन्नमयनामकमनिरुद्धं ब्रह्म ज्येष्ठत्वादिगुणपूर्णमुपासते ते सर्वपूर्ण मन्नं अन्नमयमनिरुद्धंप्राप्नुवंतीत्येतद्धै प्रसिद्धमित्यर्थः । यद्वाउपासनाप्रकारंवर्धतइत्यंतेनैवोक्त्वाश्लोकशेषेणान्नशब्दोनिरुच्यते ॥ वर्धतइति ॥ येन्नंब्रह्मोपासतेइतिसंबंधोद्रष्टव्यः । इतिश्लोकोभवतीतिसंबंधः ॥ ५ ॥ तस्मात्तस्येदमेवशिरइत्युक्तमहिमोपेतादेतस्माच्छ्लोकोक्तमहिमोपेतादन्नरसमयादनिरुद्धादन्यः विशेषेणैवान्यइत्युदित. प्राणमयआत्माप्रद्युम्नः अतरः अन्नमयनामकानिरुद्धांतरवस्थितोदेहिवज्ज्ञातव्यः । अन्नमयस्तुबहिष्ठत्वादेहवज्ज्ञातव्यः । तेनांतरवस्थितेनप्राणमयेन एषःअन्नमयः पूर्णः निश्छिद्रत्वेनपूरितः । सवाएषः अंतरवस्थितप्राणमयः पुरुषविधएव पुरुषाकारएव । तस्यांतरवस्थितस्यप्रा

उप ॥ अथोअन्नेनैवजीवंति । अथैनदपियंत्यतत । अन्नꣳहिभूतानज्येष्ठं । तस्मात्सर्वौपधमुच्यते । सर्ववैतेन्नमाप्नुवति । येन्नब्रह्मोपासते । अन्नꣳहिभूतानांज्येष्ठं । तस्मात्सर्वौषधमुच्यते । अन्नाद्भूतानिजायंते । जातान्यन्नेनवर्धते । अद्यतेत्तिचभूतानि । तस्मादन्नतदुच्यतइति ॥ ५ ॥ तस्माद्वाएतस्मादन्नरसमयात् । अन्योतरआत्माप्राणमय । तेनैषपूर्ण । सवाएषपुरुषविधएव ।

णमयस्य पुरुषविधतांपुरुषाकारता मनुअनुसारेणा यंबहिष्ठोदेहस्थानीयोन्नमयः पुरुषविधःपुरुषाकारः । प्राणमयनामकप्रद्युम्न स्योपास्त्यर्थंशिरोबाह्वादिकमाह ॥ **तस्येति** ॥ तस्यप्राणमयस्यप्रद्युम्नस्य शिरःप्राणएव । प्राणगतत्वात्प्रणेतृत्वाच्चप्राणनामकंप्र कीर्तितं । तस्यदक्षिणःपक्षोदक्षिणोबाहुर्व्यानःव्यानगतत्वात्विशेषात् आसमंताच्चेष्टकत्वाच्चव्याननामा । उत्तरःपक्षःसव्यबाहु रपानः अपानगत्वाद्दोषापनेतृत्वाच्चापाननामकः । आत्मामध्यदेहः आकाशः आकाशनामकोदानगतत्वादवकाशदातृत्वाच्चाका शनामा । पुच्छं तस्यैवविवरणंप्रतिष्ठेति पादद्वयं पृथिवी पृथिवीनामकसमानगतत्वात्सर्वस्यधारणाच्चपृथिवीनामकमित्यर्थः॥६॥ प्राणमयनामकप्रद्युम्नस्यशरीरस्थतयाप्राणादिसमस्तप्रवर्तकत्वरूपार्थेश्लोकंप्रमाणयति ॥ **तदपीति** ॥ तमेवश्लोकंपठति ॥ **प्रा णमिति** ॥ येदेवाःमनुष्याःपशवश्च तेसर्वे प्राणं प्रणेतृत्वात्प्राणनामकंप्रद्युम्न मनु तत्प्रेरणामनु तत्प्रेरणयैवेतियावत् । प्राणंति चेष्टंते हियस्मात्प्राणःप्रद्युम्नोभूतानांजगतांउत्पत्तिमतांसर्वेषांप्राणिनामायुरायुष्यप्रदस्तस्मात्सर्वायुषंसर्वायुष्यदइत्युच्यते । एवमु पासकस्यफलमाह ॥ **सर्वमेवेति** ॥ येऽधिकारिणःप्राणोहिभूतानामायुस्तस्मात्सर्वायुषमुच्यतेइतिप्रकारेणप्राणंप्रद्युम्नं ब्रह्म

---

उप० ॥ तस्यपुरुषविधतां । अन्वयंपुरुषविधः । तस्यप्राणएवशिर । व्यानोदक्षिण'पक्षः । आकाशआत्मा । पृथिवीपुच्छंप्रतिष्ठा ॥ ६ ॥ तदप्येषश्लोकोभवति । प्राणंदेवाअनुप्राणंति । मनुष्या पुशवश्चये । प्राणोहिभूतानामायु । तस्मात्सर्वायुपमुच्यते । सर्वमेवतआयुर्यंति । येप्रा- णंब्रह्मोपासते । प्राणोहिभूतानामायुः । तस्मात्सर्वायुषमुच्यतइति । तस्यैपएवशारीरआत्मा । यं'पूर्वस्य ॥ ७ ॥

सर्वायुष्यप्रदत्वादिगुणपूर्णमुपासते तेसर्वंपूर्णमायुर्मोक्षमितियावत् । यंत्येव प्राप्नुवंत्येव । तस्माद्वाएतस्मादन्नरसमयादन्योंतरआत्माप्राणमयइत्युक्तमुपसंहरति॥तस्यैषएवेति॥ पूर्वस्यतस्यान्नमयस्यशरीरस्थानीयस्यानिरुद्धस्ययएषएवप्राणमयःप्रद्युम्नःसएव शारीरआत्मा शरीरांतर्गतआत्मा अंतर्व्याप्तिविशेषेणदेहिस्थानीयइत्यर्थः । यद्वातस्यैषइत्युक्ततच्छब्दार्थंव्यनक्ति ॥ यःपूर्वस्येति ॥ पूर्वस्य अन्नविकारदेहाख्यकोशस्य योनिरुद्धः शारीरआत्मा शरीरांतर्गतात्मतयावर्तते तस्यअन्नमयकोशस्थस्यानिरुद्धस्य एषःप्राणमयः शारीरआत्मेत्यर्थः ॥ ७ ॥ तस्मादित्यपूर्ववद्व्याख्येयं । मनोमयःसंकर्षणः तेनमनोमयेन एषःप्राणमयः सवाएषः मनोमयः। तस्यमनोमयस्य । अयंप्राणमयः । मनोमयनामकसंकर्षणस्योपास्त्यर्थंशिरआदिकमाह ॥ तस्येत्यादिना ॥ तस्यशिरो यजुःप्रतिपाद्यतयायजुःसंस्थत्वात्यज्ञसंबंधिभागस्वीकर्तृत्वाच्चयजुर्नामकं । दक्षिणःपक्षोदक्षिणबाहुः ऋक्प्रतिपाद्यतयाऋक्संस्थत्वादर्चनायाःस्वीकर्तृत्वाद्वाऋङ्नामकः। उत्तरःपक्षोवामबाहुःसामप्रतिपाद्यतयासामांतःस्थत्वात्सर्वभक्तानांनिर्दोषत्वेनसमीकरणाच्चसामनामकः । आत्मामध्यदेहः आदेशः भगवत्तनुविस्तृत्युपदेशरूपत्वेनादेशनामकपंचरात्रप्रतिपाद्यत्वात्अत्यंतविस्तृतत्वाद्वादेशनामकः। पुच्छंप्रतिष्ठापादद्वयं अथर्वांगिरसप्रतिपाद्यतयाअथर्वांगिरसाख्यमुनिद्वयदृष्टभागद्वयोपेताथर्वणवेदस्थितत्वादधरंवर्तयतीतिव्युत्पत्त्यापातालाद्यधोलोकस्थितप्राणिजातप्रवर्तकत्वाच्चाथर्वनामकं। निर्वचनत्वाद्धकारस्यथकारः। अं

---

उप० ॥ तस्माद्वाएतस्मात्प्राणमयात् । अन्योंतरआत्मामनोमयः । तेनैषपूर्णः । सवाएषपुरुषविधएव । तस्यपुरुषविधतां । अन्वयंपुरुषविध । तस्ययजुरेवशिरः । ऋग्दक्षिण पक्षः । सामोत्तरःपक्षः । आदेशआत्मा । अथर्वांगिरस.पुच्छंप्रतिष्ठा ॥ ८ ॥

गिनांप्रधानानांदेवानांरसत्वात्श्रेष्ठत्वादंगिरसनामकमित्यर्थः ॥८॥ भगवच्छिरआदेर्यजुरादिवेदवाक्यप्रतिपाद्यत्वेनतन्नामकत्वमुक्तं। तत्किंसाकल्येनेतिशंकायांनेत्यभिप्रेत्याह॥ तदपीति॥ तत्रापि साकल्येनसकलवेदाप्रतिपाद्यत्वेपीत्यर्थः। तमेवश्लोकंपठति॥ यतइति॥यतोमनोमयनामकात्संकर्षणाद्वाचोवेदवाचः मनसासहाऽप्राप्य साकल्येनाप्रतिपाद्यनिवर्तंते। तस्यब्रह्मणोमनोमयस्यानंदं आनंदस्वरूपिणंमनोमयनामकंसंकर्षणमितियावत्। विद्वान्कदाचित्कुतश्चिन्नबिभेति। तस्माद्वेत्युक्तमुपसंहरति ॥ तस्यैषइति ॥ पूर्वस्यतस्यप्राणमयस्ययएषमनोमयःसशारीरआत्मेत्यर्थः । यद्वायःप्राणमयःपूर्वस्यअन्नरसमयाख्यस्यअनिरुद्धस्य शारीरआत्माऽभवत्। तस्यप्राणमयस्य एषःमनोमयः शारीरआत्मा देहिवत्तिष्ठतीत्यर्थः॥९॥ विज्ञानमयोवासुदेवः। तेनविज्ञानमयनामकेनवासुदेवेन। एषः मनोमयनामकःसंकर्षणः पूर्णः। सवाएषविज्ञानमयः। तस्यविज्ञानमयस्य। अयंमनोमयः। विज्ञानमयनामकस्यवासुदेवस्योपास्त्यर्थंशिरोबाह्वादिकमाह ॥ तस्येत्यादिना ॥ तस्यशिरःश्रद्धैव श्रद्धायांस्थितत्वात् श्रुतिधर्तृत्वाच्चश्रद्धानामकं। दक्षिणःपक्षोदक्षिणबाहुः। ऋतं यथार्थविज्ञानं तत्रस्थत्वात् ज्ञानततेर्दातृत्वाच्चऋतनामकः। उत्तरःपक्षस्सव्यबाहुः सत्यं सत्यसंस्थितत्वात्सतांनियामकत्वाच्चसत्यनामकः। आत्मामध्यदेहः योगसंस्थत्वात्सर्वलोकस्थत्वाद्वातत्रैवाश्रि

---

उप० ॥ तदप्येषश्लोकोभवति। यतोवाचोनिवर्तंते। अप्राप्यमनसासह। आनंदंब्रह्मणोविद्वान्। नबिभेतिकदाचनेति। तस्यैषएवशारीरआत्मा। यःपूर्वस्य॥ ९ ॥ तस्माद्वाएतस्मान्मनोमयात्। अन्योंतरआत्माविज्ञानमयः। तेनैषपूर्णः। सवाएषपुरुषविधएव। तस्यपुरुषविधतां। अन्वयंपुरुषविध। तस्यश्रद्धैवशिरः। ऋतंदक्षिणःपक्षः। सत्यमुत्तरःपक्षः। योगआत्मा। महःपुच्छंप्रतिष्ठा॥ १० ॥

तत्वेनसंबंधाद्धायोगनामकः । पुच्छंप्रतिष्ठापदद्वयं महः सूर्यादितेजःपुंजसंस्थत्वान्महनीयत्वाच्चमहोनामकमित्यर्थः ॥ १० ॥ महःपुच्छमितिविज्ञानमयनामकभगवत्पुच्छस्यमहनीयत्वमुक्तं । तेनावयवावयविनोरभेदाद्विज्ञानमयस्यापिपूज्यत्वंलब्धं । तत्कुतइत्याशंकायांसंप्रदायप्रवर्तकतयासमस्तयज्ञादिकर्तृत्वात्ज्येष्ठत्वेनसर्वदेवोपास्यत्वाच्चेत्यभिप्रेत्यतत्रार्थेश्लोकसंमतिंवक्तुमाह ॥ तदपितत्रापीति॥ महःशब्दोक्तपूज्यत्वोपपादकेसमस्तयज्ञादिकर्तृत्वे ज्येष्ठत्वेनसर्वदेवोपास्यत्वेचवक्ष्यमाणश्लोकोभवतीत्यर्थः । तमेवोदाहरति ॥ विज्ञानमित्यादिना ॥ श्रद्धादिस्थशिरआदिमद्विज्ञानमयाधीनंयज्ञादीतितात्पर्यार्थः। तंश्लोकेनवक्ष्यन्नाह। तदप्येषइतीतिपूर्वटीकाकाराः । विज्ञानं विज्ञानमयनामावासुदेवः कृष्णरामादिरूपेणवैदिकसंप्रदायप्रवृत्त्यर्थं यज्ञं अश्वमेधादिकं तनुते लोकेविस्तरयतिकरोतीतियावत् । नकेवलंयज्ञमेवतनुते किंतुकर्माणि उक्तातिरिक्तानि नित्यनैमित्तिकान्यपिचतनुते । ब्राह्मेमुहूर्तेउत्थायवार्युपस्पृश्यमाधवः । दध्यौप्रसन्नकरणआत्मानंतमसःपरमितिवचनात् । चापिशब्दौयज्ञकर्मकरणयोःपरस्परसमुच्चायकौ । सर्वेदेवाः विज्ञानं विज्ञानमयवासुदेवं ज्येष्ठंकालतोदेशतश्चज्यायांसं ब्रह्म यज्ञादिप्रवर्तकत्वादिगुणपूर्णमुपासते । एवंवेत्तुःफलमाह ॥ विज्ञानंब्रह्मचेदिति ॥ चेद्यदि कश्चिद्विज्ञानं विज्ञानमयंवासुदेवं ब्रह्म यज्ञप्रवर्तकत्वादिगुणपूर्णंवेद श्रवणादिना । नकेवलंवेदनमात्रेणपूर्यते किंतुचेद्यदितस्माद्विज्ञानमयाद्वासुदेवात्नप्रमाद्यति कदापिप्रमादयुक्तोनभवति सर्वदाध्यायतीतियावत् । तर्हिंअपरोक्षज्ञानद्वाराप्राक्शरीरेसतिसंपादितान्पाप्मनः अप्रारब्धपापानिहित्वाभस्मसा

उप० ॥ तदप्येषश्लोकोभवति । विज्ञानंयज्ञंतनुते । कर्माणितनुतेपिच । विज्ञानंदेवाःसर्वे । ब्रह्मज्येष्ठमुपासते । विज्ञानंब्रह्मचेद्वेद ।

द्विधाय भोगेनप्रारब्धान्पाप्मनोहित्वाक्षपयित्वालिंगभंगानंतरंयोग्यान्सर्वान्कामान्सम्यगश्नुतइत्यर्थः । तस्माद्वेत्युक्तस्योपसंहारः ॥ **तस्यैषइति** ॥ पूर्वस्यतस्यमनोमयस्य यएषविज्ञानमयःशारीरआत्मेत्यर्थः । यद्वामनोमयःपूर्वस्यप्राणमयनामकप्रद्युम्नस्यशारीरआत्माभवत् । तस्यमनोमयस्यएषःविज्ञानमयःशारीरआत्मादेहिवदस्तीत्यर्थः ॥ ११ ॥ आनंदमयोनारायणः तेनआनंदमयेन एषः विज्ञानमयःपूर्णः । एषःआनंदमयः तस्यानंदमयस्य अयंविज्ञानमयः । आनंदमयनामकनारायणस्योपास्त्यर्थंशिरोबाह्वादिकमाह ॥ **तस्येत्यादिना** ॥ तस्यशिरः प्रियं प्रियेस्थितत्वात्परैरियत्वात्प्राप्यत्वाच्चप्रियनामकं दक्षिणःपक्षोदक्षिणबाहुः मोदः अपकृष्टविषयोत्थानंदस्थत्वान्मोदनाच्चमोदनामकः । उत्तरःपक्षःसव्यबाहुः प्रमोदःप्रकृष्टविषयोत्थानंदस्थत्वात्प्रमोदनाच्चप्रमोदनामकः । आत्मामध्यदेहः आनंदः स्वरूपभूतः तत्रस्थत्वादाततत्वाच्चानंदनामकः । पुच्छंप्रतिष्ठापादद्वयं ब्रह्म देहसंस्थेब्रह्माख्येप्रधानवायौसंस्थितत्वात् भक्तानांमोक्षदानेनज्ञानानंदौबृंहयेत्यतोतश्चब्रह्मनामकमित्यर्थः । एवमन्नमयादीनांपंचानामपि येन्नंब्रह्मेत्यादिनाब्रह्मशब्दाभ्यासाद्ब्रह्मत्वमेव नजीवत्वं कोशत्वंवा । यथोक्तंसूत्रकृता आनंदमयोभ्यासादिति । उक्तंचानुव्याख्याने येन्नंब्रह्मेत्यादिरूपादभ्यासात्तैत्तिरीयके । अन्यासुचैतद्रूपासुशाखास्वपिसहस्रशः ।

---

उप । तस्माच्चेन्नप्रमाद्यति । शरीरेपाप्मनोहित्वा । सर्वान्कामान्समश्नुतइति । तस्यैषएवशारीरआत्मा । यःपूर्वस्य ॥ ११ ॥ तस्माद्वाएतस्माद्विज्ञानमयात् । अन्योंतरआत्मानंदमयः । तेनैषपूर्णः । सवाएषपुरुषविधएव । तस्यपुरुषविधतां । अन्वयंपुरुपविधः । तस्यप्रियमेवशिर । मोदोदक्षिणःपक्षः । प्रमोदउत्तरःपक्ष । आनंदआत्मा । ब्रह्मपुच्छंप्रतिष्ठा ।

आनंदमयइत्याद्यैःशब्दैर्वाच्योहरिःस्वयमिति । एवमन्नमयादिपंचरूपंब्रह्म जीवादन्यन्नास्तीतियेविदु येंचजीवादन्यदेवेतिविदुः तदुभयोःफलंवक्तुमाह ॥ तदपीति ॥ तत्रापि पंचरूपस्यब्रह्मणो जीवादनन्यत्ववेदने तदन्यत्ववेदनेचयत्फलंतद्विषयेएषः वक्ष्यमाणःश्लोकोभवतीत्यर्थः । तमेवोदाहरति ॥ असन्नेवेति ॥ ब्रह्मअन्नमयादिपंचरूपं असत् जीवादन्यत्वेनविद्यमानं नभवति दुःखीतियावत् । इतिचेत्यद्विवेद । अत्रसर्वत्रापिएकवचनंबहुवचनार्थे । विदुः । तर्हि सःते वेत्तारो सन्नेवभवति सद्भाववाचकाःशब्दाःसर्वेतेसुखवाचकाः । अभाववाचकाःशब्दाःसर्वेतेदुःखवाचकाइतिवचनेनसच्छब्दस्यसुखार्थकत्वादसन् असंतोदुःखिनोभवंति । तमआलयाः भवंतीतियावदितिज्ञानिनोविदुरितिसंबंधः । तथा ब्रह्म अन्नमयादिपंचरूपं अस्ति जीवादन्यत्वेन सुखि इतिचेद्यदि वेद विदुः तर्हि एतान्वेत्तॄन् ततःसम्यग्वेत्तृत्वादेव । संतं सतः । सुखिनः मोक्षयोग्यानितियावत् । इतिज्ञानिनोविदुरित्यर्थः । इतिश्लोकोभवतीतिसंबंधः । तस्माद्धेत्युक्तमुपसंहरति ॥ तस्यैषएवेति ॥ पूर्वस्यतस्यविज्ञानमयस्ययएषआनंदमयःसशारीरआत्मेत्यर्थः । यद्वायोविज्ञानमयः पूर्वस्यमनोमयनामकसंकर्षणस्यशारीरआत्माभवत् । तस्यविज्ञानमयस्यएषआनंदमयः शारीरआत्मेत्यर्थः ॥ १२ ॥ अथभाष्यार्थः ॥ ननुअथातोनुप्रश्नाइत्यत्रकेनकंप्रतिकृताः प्रश्नाःकथ्यंतइतिनप्रतीयते । किंचैतेषांप्रश्नानांबीजमित्यतःप्रमाणेनैवतदर्शयति ॥ इत्युक्तइति ॥ पूर्वब्रह्मणाचतुर्मुखेनवरुणं ॥ ४१ ।

उप० ॥ तदप्येषश्लोकोभवति । असन्नेवसभवति । असद्ब्रह्मेतिवेदचेत् । अस्तिब्रह्मेतिचेद्वेद । संतमेनंततोविदुरिति । तस्यैषएवशारीरआत्मा । यःपूर्वस्य १२

भाष्यं ॥ इत्युक्तेब्रह्मणापूर्वपप्रच्छवरुणोविभुं ॥

प्रति ब्रह्मविदाप्नोतिपरमित्युक्तेसति वरुणो विभुं प्रश्नानांप्रतिवचनदानेसमर्थंब्रह्माणंप्रतिपप्रच्छेत्यर्थः । प्रश्नबीजसद्भाववाच्यतःशब्दाभिप्रायइत्युक्तइत्यनेनोक्तइत्यवगंतव्यं । उताविद्वानित्यादिकंव्याचष्टे ॥ अविद्वानपीति ॥ ननुब्रह्मवित्परमाप्नोतीतिज्ञानिनःपरब्रह्मप्राप्तेरुक्तत्वेनउताविद्वानितिप्रश्नेबीजाभावात्तत्कोटिप्रसक्तिरेवनास्तीतिचेत्उच्यते । ब्रह्मविदाप्नोतिपरमित्यत्रब्रह्मविदेवेत्यवधारणाभावाद्ब्रह्मवेत्तातदवेत्ताप्याप्नोतीत्यप्यर्थसंभवमभिप्रेत्यायंप्रश्नः । अतएवाविद्वानपीतिप्रमाणेपिशब्दप्रयोगइत्यवगंतव्यं । अविद्वानित्याद्येकवचनंबहुवचनार्थे । ननुउताविद्वानाहोविद्वानितिद्विकोटिकोयमेकःप्रश्नः । कश्चित्समश्नुतइत्यपरःप्रश्नइतिप्रश्नद्वयमेवप्रतीयते । अथातोनुप्रश्नाइतिकथंबहवःप्रश्नाःप्रतिज्ञाताः । अंत्यप्रश्नेचकोव्यंतरंनप्रतीयते । अतोध्याहारेणद्वितीयंप्रश्नंतृतीयप्रश्नेकोव्यंतरंचप्रमाणेनैवदर्शयति ॥ उततत्रापीत्यादिना ॥ तत्रापि विद्वांसएवब्रह्मप्राप्नुवंतीतिपक्षेपि । वचनव्यत्ययेनब्रह्माप्नुवंतीतिवर्तते । यदिसर्वेपिविद्वांसोब्रह्माप्नुवंतीतिपक्षः अथतर्हि तत्रापि तस्मिन्पक्षेपीत्यर्थः । समाप्नुयुर्ब्रह्मेतिवर्तते । तथाचमुक्तौकिंसर्वेपिसमाइत्याशयः । अनेनोपनिषदितृतीयप्रश्नेआद्याकोटिरभिप्रेतादर्शितेतिज्ञातव्यं । कश्चित्समश्नुताइत्यस्यार्थमाह ॥ केचिदेवेति ॥ मुक्तब्रह्मगणविवक्षयाकेचिदितिबहुवचनं । उतकेचिदेवज्ञानिनोजनाःसम्यक्तद्ब्रह्मसमाप्नुयुः अपरेज्ञानिनोपिजनाअसम्यक्तदाप्नुयुरिति तृतीयप्रश्नेद्वितीयकोटिप्रदर्शनंकृतमित्यवगंतव्यं । कश्चित्समश्नुते

भाष्यं ॥ अविद्वानपियःकश्चिद्ब्रह्माप्नोतिकथंचन । विद्वानेवोततत्रापिसर्वेवाथैवकेचन । यदिसर्वेथतत्रापिसर्वेवसम्यक्समाप्नुयुः । केचिदेवोतसम्यक्तदसम्यगपरेजनाः ।

इत्यंनतरंअध्याहर्तव्यमाह ॥ **इतिपृष्टःसन्निति** ॥ तत्रउइतिब्रह्मकृतसमाधानाभिप्रायमाह ॥ **अज्ञाइत्यादिना** ॥ तत्राज्ञानप्रा प्नुयुर्ब्रह्मेत्यनेनद्विकोटिकप्रश्नत्रयमध्येआद्यप्रश्नेआद्यकोटिरनभ्युपगमेनैवपरास्ता। ज्ञानिनांमोक्षदश्चसः ज्ञानीप्रियतमोतोमेतंविद्वा नेवचामृतइत्यादिप्रमाणविरोधादितिभावः । तत्रद्वितीयामेवकोटिमंगीकरोति ॥ **प्राप्नुयुर्ज्ञानिनइति** ॥ द्वितीयप्रश्नेद्विती यकोटिरसंमतैव । नकश्चिद्ब्रह्मवित्सृतिमनुभवति । अनियमःसर्वेषामविरोधादित्यादिश्रुतिसूत्रविरुद्धत्वादित्यभिप्रेत्यतत्राद्यामेव कोटिमंगीकरोति ॥ **अखिलाइति** ॥ तृतीयप्रश्नेआद्यकोटिरसंमतैव । अक्षण्वंतःकर्णवंतइत्यादिप्रमाणविरोधेनसर्वेषांज्ञानिनां मुक्तौसाम्येनसम्यग्ब्रह्मप्राप्तेरभावादित्यभिप्रेत्य केचिदेवोतसम्यक्तदसम्यगपरेजनाः ज्ञानिनोपीत्युक्तद्वितीयकोटिमेवांगीकरोति॥ **तत्रापीति** ॥ ब्रह्मप्राप्तेष्वखिलेष्वपिज्ञानिषुमध्यइत्यर्थः । ननुविरिंचस्येवसम्यग्ब्रह्मप्राप्तिर्भवति । अन्येषांतारतम्येनब्र ह्मप्राप्तिर्भवतीत्येतत्कुतइत्यतआह ॥ **सुखविशेषतइति** ॥ विशेषोवैचित्र्यं मुक्तानांतावत्सुखेवैचित्र्यमस्ति । तत्राप्या नंदस्यविचित्रता । मुक्तस्तुस्यात्पराभासःसुनित्यसुखभोजनात् । तत्रापितारतम्यंस्यात्तेषुब्रह्माधिकोमतः । विरिंचस्यैव यन्मुक्तावानंदस्यसुपूर्णतेत्यादिप्रमाणात् । नचतदाकस्मिकं । यतःसाधनतारतम्याधीनंब्रह्मप्राप्तितारतम्यमित्यंगीकार्यं । अन्य थातन्नस्यादितिभावः । ब्रह्मप्राप्तितारतम्यंच केचिदत्रैवमुच्यंतेनोत्क्रामंतिकदाचन । अत्रैवचस्थितिस्तेषामंतरिक्षेचकेचन ।

भाष्यं ॥ ज्ञानिनोपीतिपृष्टस्सन्ब्रह्माप्राहचतुर्मुखः । अज्ञानप्राप्नुयुर्ब्रह्मप्राप्नुयुर्ज्ञानिनोखिलाः । तत्रापिसम्यक्प्राप्तिस्तुविरिंचस्यैवसर्वदा । अन्येषांतारतम्येनप्राप्तिस्सुखविशेषतः ।

केचित्स्वर्गेमहर्लोकेजनेतपसिचापरे । केचित्सत्येमहाज्ञानागच्छंतिक्षीरसागरं । तत्रापिक्रमयोगेनज्ञानाधिक्यात्समीपगाः। सालो
क्यंचसरूपत्वंसामीप्यंयोगएवच । इमामारभ्यसर्वत्रयावत्सुक्षीरसागरं । पुरुषोनंतशयनःश्रीमान्नारायणाभिधइतिप्रमाणानुसारे
णज्ञातव्यं । समासतःसंकोचतः ॥ पश्चादिति ॥ अज्ञानप्राप्नुयुर्ब्रह्मेत्येतद्विस्तरेणयदाह्येवैषएतस्मिन्नुदरमंतरंकुरुतइत्यनेनोच्यते।
प्राप्नुयुर्ज्ञानिनोखिलाइत्येत द्यदाह्येवैषएतस्मिन्नदृश्यइतिवाक्येनोच्यते । तत्रापिसम्यक्प्राप्तिस्तुविरिंचस्यैवेत्येत त्क्षितिपमार
भ्यब्रह्मपर्यंतमानंदतारतम्यकथनपरेण सैषानंदस्यमीमांसाभवतीत्यादिग्रंथेनोच्यते। तत्राधिकारिवर्गेब्रह्मणएवपूर्णानंदत्वोक्त्या
तस्यैवसम्यक्परब्रह्मप्राप्तिरन्येषांतारतम्येनेतिस्पष्टमवगमात् । कश्चिदेवसम्यक्समश्नुतइत्यस्यज्ञानिनएवमुच्यंतेइत्यत्रैवांतर्भा
वात् । उत्तरत्रविस्तरात्तदनुक्तिरितिपूर्वटीकाकाराः। हेत्यनेनसंक्षेपविस्तराभ्यांतुकथयंतिमनीषिणः । बहुवारस्मृतेस्तस्यफल
बाहुल्यकारणादितिप्रमाणप्रसिद्धिंदर्शयति । ननुअयमभिप्रायउकारेणकथंलब्धइत्यतआह ॥ कश्चिदेवेति ॥ कश्चित्समश्नुत
इत्यस्यार्थानुवादोयं । तथैवेत्युकारमित्यन्वयः । कश्चिदेवसम्यक्तदाप्नुयादितियदुक्तं तत्तथैवेत्यर्थकमुकारमित्यर्थः। तथाचाऽ
ज्ञानिनोपिब्रह्माप्नुवंतिज्ञानिनएववा ज्ञानिनोपिसर्वेब्रह्माप्नुवंतिवा केचनवा यदिसर्वेपि तत्रापिसर्वेपिज्ञानिनःसम्यक्ब्रह्माप्नुयुरुत
कश्चिदेवसमश्नुतइतिप्रश्ने कश्चित्समश्नुतइतिवाक्यानंतरमेव तथैवेत्यर्थकस्यउकारस्यब्रह्मणाप्रयुक्तत्वात्कश्चिदेवविरिंचःसम्यक्त

भाष्यं ॥ इत्यभिप्रायवान्ब्रह्माह्युकारेणसमासतः । उक्त्वाप्रश्नोत्तरंपश्चाद्विस्तरेणजगादह । कश्चिदेवोतसम्यक्तदाप्नुयादितिवाक्यतः । अनं
तरंतथैवेतिब्रह्मोकारमुवाचह ।

द्भ्राश्रुतइत्यभिप्रायउकारप्रयोगेणलब्धइतिभावः । ननुतर्हिसोकामयतेत्यादिनातत्सृष्ट्वातदेवानुप्राविशदित्यादिनाचग्रंथेनसृष्टिः
सृष्टपदार्थप्रवेशादिकंचकिमसंगतमेवोच्यतइत्यतस्तस्यसंगतिमाह ॥ अज्ञोनैवेत्यादिना ॥ इतीममर्थं यदाह्येवैषएतस्मिन्नित्यादौ
ज्ञापयितुं विष्णोःस्वातंत्र्यज्ञापनायस्वातंत्र्यादिरूपमाहात्म्यज्ञापनाय सृष्टिंसृष्टपदार्थप्रवेशंचाहेत्यन्वयः । ननुज्ञान्येवैतदवा
प्नुतइत्युक्तायांज्ञानिनोब्रह्मप्राप्तौविष्णोःस्वातंत्र्यादिरूपमाहात्म्यज्ञानस्यकथमुपयोगः । येनतज्ज्ञापनायसृष्ट्याद्युक्तिःसंगतेति
चेत् । न । ब्रह्मप्राप्तिरूपोमोक्षस्तावत्प्रसादादेवभवति । यस्यप्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यतेनापरेणेत्यादिश्रुतेः । प्रसा
दश्चगुणोत्कर्षज्ञानसाध्यः । लोकेतथादर्शनात् । तथाच तेषांदुःखप्रहाणायश्रुतिरेषाप्रवर्ततइतिवचनादधिकारिणःप्रतिभगवत्प्र
सादोत्पादनद्वारामोक्षंसाधयितुंप्रवृत्तानांवेदानांतद्गुणोत्कर्षज्ञापनएवमहातात्पर्यंवक्तव्यं । अतःस्वातंत्र्याख्यमहैश्वर्यज्ञापनायसृ
ष्ट्यादिकंकथ्यतइतिनासंगतिरित्याह ॥ माहात्म्यज्ञानतइत्यादिना ॥ तुशब्दएवार्थे । माहात्म्यज्ञानतएवेतिसंबध्यते । राजाहमि
तिवदंतंराजानोघातयंतिहीतिदृष्टत्वात् । यतोमहांतोलोकेमाहात्म्यज्ञानतःप्रीतिंयांतीतिदृष्टमितिहेतोस्तस्यविष्णोर्महैश्वर्यंभक्ता
नांतत्प्रीत्युत्पादनायज्ञातव्यतयोच्यतइत्यन्वयः । तत्त्वेवभयंविदुषोमन्वानस्य भीषास्मादित्यादेरपिप्रकृतोपयोगंदर्शयति ॥ तद्व
शाएवेति ॥ ईश्वराःपचनादिव्यापारसमर्थाःअग्न्यादयोपि तद्वशाःविष्णुवशाएव किमुतदन्ये । ततोहेतोःसएवैकोमुक्तिदइत्य

भाष्यं ॥ अज्ञोनैवतदाप्नोतिज्ञान्यंवैतदवाप्नुते । इतिज्ञापयितुंविष्णोस्स्वातंत्र्यज्ञापनायतु । आहसृष्टिप्रवेशंचमाहात्म्यज्ञानतोयत. । प्रीतियां
तिमहांतस्तुतद्वशाएवचेश्वरा· । अग्न्यादयोपिकिमुततदन्येमुक्तिदस्ततः ।

न्वयः। किमुतदन्यइत्यनेन भीषास्माद्वातइत्यादिकमुपलक्षणमित्युक्तंभवति। मुक्तिदोविज्ञेयइत्यनेनाथसोभयंगतोभवति इत्यस्य तात्पर्यमुक्तंज्ञातव्यं। सोकामयतेत्यादिनासृष्ट्युक्तेःसंगत्यंतरमाह॥ स्रष्टृत्वादिपूर्णैश्वर्यादिरूपवान्सहरिर्विज्ञेयइति॥ ज्ञान्येवैतदामु तइत्युक्तं। तत्रब्रह्मज्ञानंकीदृशंविवक्षितमित्याशंकायां जगत्स्रष्टृत्वादिनारूपेणज्ञानमेवब्रह्मज्ञानंविवक्षितमित्यभिप्रेत्यसृष्ट्यादिक मुच्यतइतिनासंगतिरितिभावः। महैश्वर्यं जगत्स्रष्टृत्वादिरूपं। उच्यते सोकामयतेत्यादिनेतिशेषः ॥१३॥ एवंसोकामयतेत्याद्यु त्तरप्रकरणस्यसंगतिमभिधायेदानींतद्वाक्यजातंप्रमाणेनैवव्याचष्टे ॥ **सत्वकामयदित्यादिना** ॥ तत्रसोकामयतबहुःस्या मितिवाक्यंव्याचष्टे ॥ **सत्विति** ॥ सःप्रलयस्थोविष्णुः कामनायाःअमोघत्वरूपविशेषसूचनाय लयस्यत्वष्टमोभागःसृष्टिकाल उदाहृतइतिवचनोक्तकालविशेषसूचनायवातुशब्दः। यथोक्तं ईक्षाबभूवपरनामनिमेषकांतइति। अस्यसृष्टस्यजगतः यद्वा इत्ये वाकामयदित्येवंतुशब्दएवार्थे। ब्रह्मणोजगदाकारेणपरिणामभवनकामनाव्यावृत्त्यर्थः। ननुतर्हीदंसर्वमसृजतेत्युत्तरवाक्यमसं गतं। नह्यन्यार्थसंकल्पमभिधायान्यक्रियाभिधानंसंगच्छते नहीश्वरोस्वतंत्रोसत्यकामोवा इत्यतआह॥ **स्याज्जगच्चेति**॥ निया मकत्वस्यनियम्यापेक्षत्वान्नियामकबहुस्वरूपत्वार्थंनियम्यंजगत्स्यादित्यचिंतयदित्यर्थः। अतएवसृष्ट्वाजगदिदंसर्वमितिबहुरूप भवनकामनाप्रकारोविवृतः। यथोक्तमनुव्याख्याने। तदर्थंह्यसृजज्जगदिति। प्रजायेयेत्यस्यायमर्थइत्यप्याहुः। सतपोतप्यते त्यत्रकृच्छ्रादिरूपंसंतापात्मकं विचारापरपर्यायालोचनात्मकंवातपश्चकारेतिप्रतीयते तदयुक्तं। तथात्वेऽप्राप्तकामत्वस्याज्ञत्वस्य

भाष्यं ॥ सएवैकस्सविज्ञेय पूर्णैश्वर्यादिरूपवान। इतितस्यमहैश्वर्यमुच्यतेसत्वकामयत्। सृष्ट्वाजगदिदंसर्वंनियामकतयास्यतु। बहुरूपो भवानीतिस्याज्जगच्चेत्यचिंतयत्।

चप्राप्तेरतःप्रकृतेविवक्षितंतपःशब्दार्थमाह ॥ **स्यादित्यालोचनादिति** ॥ स्यादित्यस्यनञासंबंधः । आलोचनंनामज्ञानमेव विवक्षितं नतुविचारात्मकंसंतापात्मकंवा । तथाचालोचनात्ज्ञानरूपात्तपसोऽन्यत्तपःसंतापात्मकंविचारात्मकालोचनात्मकंवा वि ष्णोर्नस्यात् नाभिप्रेतं । इतिशब्दःसमाख्याप्रदर्शकः । यःसर्वज्ञःसर्वविद्यस्यज्ञानमयंतपइतिश्रुतेरित्यर्थः । तथाच सतपोतप्य तेत्यस्यस्वोदरसंस्थंजगद्दर्शेत्यर्थोवर्णनीयः । उक्तंचभगवत्पादैः । दृष्ट्वासचेतनगणान्जठरेशयानानिति । यथोक्तंकर्मनिर्णयटी कायां । यस्यतपोज्ञानमयं नत्वालोचनात्मकंवासंतापात्मकंवा अज्ञोह्यालोचते । अप्राप्तकामश्चतपस्यति । तपस्तप्त्वाइदंसर्वमसृजते त्यस्यव्याख्यानमेतदिति । ननुकृष्णाद्यवतारेषुरुद्रादीन्प्रतिसंतापाद्यात्मकतपःकरणस्यदर्शनात्कथमेतदित्यतआह ॥ **अवतारेष्विति** ॥ स्यादित्यनुवर्तते । इदंमेइतिशेषः । तथाचावतारेषुइदंमेस्यादित्येवंतपस्विनामनुकृतिर्बाह्यवृत्त्यैवनत्वंतर्वृत्त्ये त्यर्थः । उक्तंचतात्पर्यनिर्णयेभगवत्पादैः। त्वामाराध्यतथाशभोग्रहीष्यामिवरंसदेत्यादिवचनादितिज्ञातव्यं । उक्तंचतात्पर्यनिर्णये भगवत्पादैः । ययौकैलासमद्रीशंचकारेवतपोत्रच । स्वीयानेवगुणान्विष्णुर्भुंजन्नित्येनशोचिषा । शार्वंतपःकरोतीवमोहयामास दुर्जनान् । विमोहनायासुरसर्गिणांप्रभुःस्वयंकरोतीवतपःप्रदर्शयेत् । अहंत्वांपूजयिष्यामिलोकसंमोहनोत्सुखः । कृष्णोप्ययो ग्यजनमोहनमेववांछंस्तुष्टावरुद्रहृदिगंनिजरूपमेवेति । इदंसर्वमसृजतेत्यत्रोक्तासृष्टिर्नामब्रह्मणोजगदाकारेणपरिणामएवेतिभा स्करस्तदयुक्तं । अविकारःसदाशुद्धोनित्यआत्मासदाहरिरित्यादिप्रमाणविरोधादतोत्राभिप्रेतांसृष्टिंविवृणोति॥ **सृष्टिर्नामेति** ॥

भाष्यं ॥ स्यादित्यालोचनान्नान्यत्तपोविष्णोःकदाचन । अवतारेष्वनुकृतिर्बाह्यवृत्त्यातपस्विनां । सृष्टिर्नामस्वरूपात्तुबहिर्निष्क्रमणंस्मृतं ।

स्वदेहादिच्छयाविश्वंभुक्तपूर्वंजनार्दनः । ससर्जमातापितृवदूर्णनाभिवदेववा । प्रधानंपरिणाम्येशोनिर्विकारःस्वयंसदेत्यनुव्या ख्यानानुसारेणैतदर्थोद्रष्टव्यः । अत्रयोखिलंजगज्जठरेनिधायलक्ष्मीभुजांतरतःसन्नारायणःप्रलयेआसीत्तस्मादेवमूलरूपाज्जग त्सृष्टिर्भवतीतिप्रतीयते । तथातत्सृष्ट्वातदेवानुप्राविशदित्यत्रापिमूलरूपिणएवहरेःप्रवेशउच्यतेइतिप्रतीयते तांप्रतीतिंवारयंस्तत्र विशेषमाह ॥ यद्यपीत्यादिना ॥ यद्यपीदंसर्वंजगत्महात्मनोऽपरिच्छिन्नस्यमूलरूपिणःस्वस्यैवोदरस्थं । तथाचतस्मादे वबहिर्निष्क्रमणेनोत्पत्तुमर्हं तथापीत्यर्थः । स्वेच्छयेतिशेषः । द्वितीयेनरूपेणद्वितीयादिरूपेणवासुदेवप्रद्युम्नानिरुद्धरूपेण । य थोक्तंतात्पर्यनिर्णये । व्यूढश्चतुर्धाभगवान्सएकोमायांश्रियंसृष्टिविधित्सयार । रूपेणपूर्वेणसवासुदेवनाम्नाविरिंचंसुषुवेचसातः । ससृष्टिहेतोःप्रद्युम्नतामुपगतःकृतितांचदेवी । निर्देहकान्सभगवाननिरुद्धनामाजीवान्सकर्मसहितानुदरेनिवेश्य । चक्रेथदेहस हितान्क्रमशःस्वयंभूप्राणात्मशेषगरुडेशमुखान्समग्रानिति । रूपांतरेण अनिरुद्धादिरूपांतरेण । अनेनजीवेनात्मनानुप्रविष्टमि तिश्रुतेः।जीवइतिभगवतोऽनिरुद्धस्याख्येतिश्रुतिः। सजीवनामाभगवान्प्राणधारणहेतुतइत्यादिस्मृतेः । नारायणानिरुद्धौतुभो ज्यवस्तुषुसंस्थितौ । संकर्षणश्चप्रद्युम्नस्तत्रभोक्तृषुसंस्थितौ । अवकाशप्रदोनित्यंवासुदेवोनभःस्थितः । स्थितोनिरुद्धोहृदिचाखिलस्ये त्यादिस्मृतेश्चेतिज्ञातव्यं । अत्राहभास्करः । सच्चत्यच्चाभवत् । निरुक्तंचानिरुक्तंचनिलयनंचानिलयनंच विज्ञानंचाविज्ञानंच सत्यं चानृतंचसत्यमित्यस्यांश्रुतौब्रह्मणःसत्त्यदादिशब्दाभिधेयमूर्तामूर्तराशिद्वयात्मकविश्वभावएवोच्यते । अतःसइदंसर्वमसृजतेत्य

---

भाष्यं ॥ यद्यपीदंजगत्सर्वंस्वोदरस्थंमहात्मनः । तथाप्येषद्वितीयेनरूपेणबहिराक्षिपेत् । रूपांतरेणाविशच्चजगत्सर्वंजनार्दनः ।

त्रापिसृष्टिःपरिणामरूपैवव्याख्येयेति। तदयुक्तं। सइदंसर्वमसृजत तत्सृष्ट्वातदेवानुप्राविशत् । तदनुप्रविश्य सच्चत्यच्चाभवदिति वचनेनब्रह्मणःसदादिभवनात्पूर्वमेवमूर्तामूर्तरूपविश्वोत्पत्तेरवगतत्वात् । तथाचनेदंसदादिभवनं विश्वोत्पादनं विश्वोत्पत्त्युत्तरकालीनत्वात् । याक्रियायदुत्तरकालीना नासावसौ यथाभुक्त्वाचरतीत्युक्तचरणं। नपूर्वकालीनभोजनमितिप्रयोगसंभवात्। अनुपपन्नार्थंचान्यथावाक्यमापद्यते । नहिमृत्सुवर्णादिकंघटरुचकादिसृष्ट्वातदनुप्रविश्यतद्भवति। यद्वाविश्वं सत्त्यदादिशब्दार्थतयात्रनविवक्षितं । तद्भवनात्पूर्वकालीनोत्पत्तिकत्वात् । भोजनवदित्यादिप्रयोक्तव्यं । ननुतर्हिकिंःश्रुत्यर्थः । जगद्भावंविनाअवसादनकर्तृत्वादिधर्मयोगेनब्रह्मैवसत्त्यदादिशब्दादिशब्दवाच्यंभवतीतिब्रूमः । ननुतर्हितदनुप्रविश्येत्यस्यान्वयोनास्ति । नहिब्रह्मणोऽवसादनकर्तृत्वादिधर्मयोगेसदादिशब्दवाच्यत्वेवाजगत्प्रवेशस्योपयोगोस्ति । किंचैवंसतिप्रसिद्धिविरोधः । सत्त्यदादिशब्दानां द्वेवावब्रह्मणोरूपेमूर्तंचामूर्तंचस्थितंचयच्चसच्चत्यच्चेत्यादौमूर्तामूर्तवाचितयाप्रसिद्धत्वादितिचेन्न । यद्यप्यनन्यापेक्षयावसादनकर्तृत्वादिधर्मयोगःसदादिशब्दवाच्यताचास्त्येवब्रह्मण स्तथापितत्तद्वस्तुगतरूपेणैवतत्तच्छब्दवाच्यत्वमित्यस्त्येवव्यवस्था । तथाचमूर्तामूर्तजगद्गतेनरूपेणैवब्रह्मसदादिशब्दवाच्यमतस्तदनुप्रविश्येतिसंबध्यते । परमेश्वरसन्निधानादेवमूर्तादेरपिसदादिशब्दवाच्यताचोपपद्यतइतिभावेन त्यदनिरुक्तनिलयनविज्ञानसत्यपदवाच्यं विश्वं तथासन्निरुक्तानिलयनाविज्ञानानृतशब्दवाच्यंचविश्वंदर्शयंस्तत्रतच्छब्दवाच्यतायांनिमित्ततयावस्थितेविष्णौतान्शब्दान्निरुच्यदर्शयति ॥ त्यचानिरुक्तमि

भाष्यं ॥ त्यचानिरुक्तंविज्ञानंतथानिलयनंमहान् ।

**त्यादिना** ॥ त्यत् अनिरुक्तंविज्ञानंतथानिलयनंसत्यंचेतिशब्दपंचकेन महा न्महत्तत्वाभिमानीब्रह्मा प्राण स्तथाश्रीश्चकथ्य तेइतिशेषः । नवाएकेनाक्षरेणछंदांसिवियंतिनद्वाभ्यामितिवचनादविज्ञानंचानिलयनमितिनवाक्षरत्वेपिनदोषः । सदादिशब्दपं चकेनप्रकृतिप्राणयोःश्रीमुख्यप्राणयोः । उपलक्षणमेतत् । महतोब्रह्मणश्चसकाशात्परंअन्यत्विश्वंकथ्यतइत्यर्थः । किंस्वातं त्र्येणनेत्याह ॥ **तद्वेति** ॥ तुशब्दोवधारणे । तदंतर्गतविष्णुसंबंधादेवश्यादिकंविश्वंत्यदादिशब्दवाच्यमित्यर्थः । विष्णोरपि तच्छब्दवाच्यत्वंकिमन्यसंबंधादेवेतिशंकायांनेत्याह ॥ **स्वतइति** ॥ स्वातंत्र्येणेत्यर्थः । तथाचतच्छब्दप्रवृत्तिनिमित्तानांवि ष्णोरेवस्वतोऽन्यानधीनतयासद्भावात्विष्णोरेवमुख्यतःतच्छब्दवाच्यत्वं । अन्यत्रविद्यमानस्याप्यल्पस्यप्रवृत्तिनिमित्तस्यतद धीनत्वादमुख्यतोन्यस्यतच्छब्दवाच्यत्वमितिभावः। यथोक्त। स्वातंत्र्यंतद्गतत्वंचशब्दवृत्तेर्हिकारणं। स्वातंत्र्यंतत्रमुख्यंस्यादिति। कानितच्छब्दप्रवृत्तौनिमित्तानि यानिविष्णौअनन्याधीनतयावर्तंते इत्यतःतानिदर्शयति॥ **ततइत्यादिना** ॥ त् यत्इत्यनयोः क्रमेणार्थःततोव्याप्तोनियामकश्चेति । अवाच्यतःअवाच्यत्वतः । तथाचनिर्नितरांसाकल्येनोक्तंनभवतीत्यनिरुक्तमित्यर्थः । तत्रहे तुरानंत्यादिति । साधुस्वरूपतःसाधुगुणस्वरूपत्वादित्यर्थः। सत्यंसाधुगुणत्वात्सइतिवचनात् । एवमव्याख्यानेद्वितीयसत्यशब्दे नपौनरुक्त्यप्रसंगइतिज्ञातव्यं । सदादिशब्दप्रवृत्तौनिमित्तंदर्शयति ॥ **अवसादेति** ॥ षद्लृविशरणगत्यवसादनेष्विति धातुव्या

---

भाष्यं॥ सत्यंप्राणस्तथाश्रीश्चसन्निरुक्तंतथानृतं। अविज्ञानंचानिलयनंप्रकृतिप्राणयोःपरं। तद्गविष्णोस्तुसंबंधात्स्वतस्तन्नामकोहरिः। ततोनियामक श्चेतित्यदानंत्यादवाच्यत.। अनिरुक्तंनिलयनंसर्वाधारत्वतोहरि। विज्ञानंसर्वविज्ञानात्सत्यंसाधुस्वरूपतः। अवसादसुवाच्यत्वदौर्बल्याज्ञम्यसाधुता.।

ख्यानादवसादनंखेदः मनःशैथिल्यं सच्छब्दप्रवृत्तिनिमित्तंनिरुक्तशब्दप्रवृतिनिमित्तं सुवाच्यत्वं । अनिलयनशब्दलब्धार्थोदौर्बल्यं। सर्वाधारत्वाभावोपपादकत्वात्तस्येतिज्ञातव्यं । अज्ञप्तीत्यविज्ञानशब्दप्रवृत्तिनिमित्तं । असाधुतेत्यनृतशब्दप्रवृत्तिनिमित्तं । ऋतशब्दपर्यायसत्यशब्दस्यसाधुस्वरूपार्थतयाव्याख्यातत्वात् । प्रकृतिःश्रीदेवी । प्राणशब्देनब्रह्मापिग्राह्यः । अन्यत्र प्रकृत्यादित्रितयभिन्नेजगति अवसादादीन्कुर्वन्हरिःवर्ततेयतोतस्तन्नामकः सदादिनामपंचकवाच्यइतियोजना। सत्यमभवदित्यत्रस्थद्वितीयसत्यशब्दार्थमाह ॥ **साधुस्वरूपइति** ॥ सन्—निर्दुष्टोहरिः । मंगलानांचमंगलमितिवचनात्साधुस्वरूपोमंगलस्वरूपः सन्नेवयतःसर्वत्रास्ति अतस्सत्यनामा सत्येतिनामवानित्यर्थः । ननुसत्यादिशब्दानांजगद्वाचित्वपक्षेकथंव्युत्पत्तिःकर्तव्येत्यतःतत्प्रकारंदर्शयति ॥ अनेनगतत्वादेर्निमित्ताज्जगतिअनृतादिकंनामेति । तथाचप्रकृत्यादिभिन्नंजगत् अनचेष्टायामितिधातोरनेनचेष्टकेनऋतंगतंप्रविष्टंयतोऽतोऽनृतं । आदिपदेनासाधुत्वाच्चानृतं । अविज्ञानं सर्वज्ञानरहितत्वात् । अनिलयनं सर्वाधारत्वाभावात् । निरुक्तं नितरामुक्तत्वात् । सत् अवसादनात् । खेदेनमनःशैथिल्ययुक्तत्वात् । तथाप्रकृत्यादिकंत्रयंततत्वान्नियामकत्वाच्चत्यत् । अनिरुक्तमवाच्यत्वात् । प्रकृतिर्निलयनं । भगवदितरजगदाधारत्वात् । तदुभयातिरिक्तसर्वजगदाधारत्वान्महान्प्राणश्चेतिज्ञातव्यं । विज्ञानं यथायोग्यभगवदितरसर्वविज्ञानात् । सत्यं साधुगुणस्वरूपत्वादितिग्राह्यं । नन्ववसादनसुवाच्यत्वदौर्बल्याज्ञस्यसाधुतानाममंगलत्वात्तन्निमित्तकसदादिशब्दवाच्यत्वंकथंभगवतोयुक्तमित्याशंकापरिहारायप्राप्तं यदिदंकिंच तत्सत्य

भाष्यं ॥ प्रकृतिप्राणतोन्यत्रकुर्वंस्तन्नामकोहरि । अतस्साधुस्वरूपस्सन्सत्यनामानृतादिकं । नामानेनगतत्वादेः ।

मित्याचक्षतेइतिवाक्यंव्याचष्टे ॥ **यदिदंकिंचेति** ॥ सत्यशब्दार्थःसाधुतैवेति। स्वार्थेतल्प्रत्ययः। साध्वेव मंगलस्वरूपमेवेतितदर्थः। सन्निरुक्तादिशब्देनयदिदंकिंचभाषितं। तत्सर्वंसाधुतैव साध्वेवेतिहिप्रसिद्धमित्यर्थः। आचक्षतइत्यस्यार्थोहीति। एतदेवविविच्यदर्शयति ॥ **अवसादनादिहेतुत्वमिति** ॥ सर्वशःसर्वमवसादनादिहेतुत्वं हियस्माद्भगवतिसाधुतैव साध्वेव मंगलमेव अवसादादिस्तदधिकरणत्वमितियावत्। असाधुता असाध्वेवाऽमंगलमेवेत्यर्थः। नन्ववसादनादिहेतुत्वस्यसाधुत्वेपिप्रकृतेकिमायातं। नहि अवसादादिहेतुत्वंप्राक्प्रतिपादितं किंत्ववसादादिकमेवेत्यतोऽवसादनादिहेतुत्वमेवप्रतिपादितमित्याह ॥ **तत्कर्तृत्वंहीति** ॥ हियस्मात् तत्कर्तृत्वं अवसादादिकर्तृत्वमेवास्माभिर्भाषितं। अवसादसुवाच्यत्वदौर्बल्याज्ञत्वस्यसाधुताः। प्रकृतिप्राणतोन्यत्रकुर्वंस्तन्नामकोहरिरित्युक्तत्वादतोनकोपिदोषइत्यर्थः। यथोक्तमनुव्याख्याने। एवंदुःख्यादिशब्दाश्चस्वातंत्र्यापेक्षयोदिताः। नैवदोषाहरौतद्वबुध्योक्तादोषकारिणः। तस्मात्तेदोषशब्दाश्चतत्रैवगुणवाचकाइति ॥ १४ ॥ पूर्वंप्रलयकालगोनारायणोवासुदेवरूपेणप्रजायेयेतिकामनांकृत्वावासुदेवोभूत्वाजगत्ससर्जेत्युक्तं। तत्रसंमतितयाश्लोकमुदाहरतिब्रह्मा तदपीति। तत्राग्रेप्रलयेअसदेवशून्यमेवासीत्। ततोसतःशून्यात्सदजायतेत्येवंशून्यस्यप्रलयेसत्त्वंजगत्कारणत्वंचात्रप्रतिपाद्यतइतिप्रतीयते। तदयुक्तं। असतःसदुत्पत्तेःक्वाप्यदृष्टत्वात्। कुतस्तुखलुसोम्यैवंस्यात्कथमसतःसज्जायतेतिश्रुतिविरोधाच्चेतिभावेनप्रमाणेनैवतं

---

भाष्यं ॥ यदिदंकिंचभाषितं। सन्निरुक्तादिशब्देनतत्सर्वंसाधुतैवहि। अवसादनादिहेतुत्वंसाधुतैवहिसर्वश। असाधुतावसादादिस्तत्कर्तृत्वंहिभाषितं।

श्लोकंव्याचष्टे ॥ अनासाद्यस्त्विति ॥ पूर्वंप्रलयेस्थितोनारायणाभिधोहरिःकेनाप्यनासाद्योप्राप्यइतिहेतोरसन्नामाभवदितिसंबंधः । ततोवैसदजायतेत्येतद्व्याचष्टे ॥ सआद्यस्त्विति ॥ सनारायणाभिधःप्रभुःवासुदेवोभवत् । सचासाद्योज्ञानिप्राप्यइतिहेतोःसन्नामेत्यर्थः । वासुदेवस्यनिजमुक्तिपदप्रदातृत्वेनज्ञानिप्राप्यतायाःप्रसिद्धत्वादितिभावः । गत्यर्थात्सदेःकर्मणिक्विबंतस्यरूपमेतत् । तदात्मानंस्वयमकुरुतेत्येतत्ब्रह्मैवस्वात्मानंजगदाकारेणाकुरुतेत्यपव्याख्यानमित्यभिप्रेत्यव्याचष्टे॥सवासुदेवइति ॥ संकर्षणादिकं संकर्षणादिरूपोपेतं। अनेननारायणएवसंकर्षणादिरूपाणिससर्जेतिप्रतीतिरप्यपास्तावेदितव्या। अतएवसंकर्षणश्च सबभूवपुनःसुनित्यः । ससृष्टिहेतोःप्रद्युम्नतामुपगतः । स्थित्यैपुनःसभगवाननिरुद्धनामेतितात्पर्यनिर्णयेपितच्छब्दैःवासुदेवएवग्राह्योननारायणइतिसंप्रदायविदः । तस्मात्तत्सुकृतमुच्यतइतिवाक्यंव्याचष्टे ॥ तस्मादिति ॥ यस्माद्वासुदेवःस्वात्मानंसंकर्षणादिकंचक्रे तस्मात्कारणात्सवासुदेवःसुकृतमित्युच्यते । सुसम्यक्संकर्षणाद्यात्मनास्वस्वरूपंकृतमितिव्युत्पत्त्येत्यर्थः । यद्वैतत्सुकृतंरसोवैसइत्येतद्व्याचष्टे ॥ सआनंदइति ॥ सःसुकृतनामवान्वासुदेवःआनंदः आनंदवान् । रसःसारोवरश्चेतिशब्दाएकार्थवाचकाइत्यभिधानात् रसोवरःश्रेष्ठः। आनंदविशिष्टस्यविशेषणंभवदिदंवरत्वंविशेषणभूतमानंदमुपसंक्रामति। तथाच रसानंदोमहानंदः पूर्णानंदइत्यर्थोद्रष्टव्यः । यद्वासइत्यनूद्य आनंदइतिशेषःपूरितः । तथाचयद्वैतत्सुकृतं सःतदीयानंदो

भाष्यं ॥ अनासाद्यस्त्वसन्नामापूर्वंनारायणाभिध. । सआसाद्यश्चसन्नामावासुदेवोभवत्प्रभु. । सवासुदेवस्स्वात्मानंचक्रेसंकर्षणादिकं । तस्मात्तत्सुकृतंनामसआनंदोरसः

रसोवरः पूर्णइत्यर्थः । रसइत्यानंदोयतः । अतस्तद्रूपोभगवानानंदइतियोजनेतिपूर्वटीकाकाराः । मुक्तानांसुखकारणत्वाच्चायं पूर्णानंदइतिवक्तुंप्रवृत्तं रसंह्येवायंलब्ध्वेतिवाक्यंहेतुहेतुमद्भावंदर्शयन्व्याचष्टे ॥ ततइति ॥ यतइतिशेषः । यतःवासुदेवः पूर्णानंदः ततआनंदं । पूर्णानंदस्वरूपमेनंवासुदेवंसंप्राप्यैवमुक्तोमोदेत् । स्वयोग्यानंदपूर्णोभवेदन्यथातन्नस्यादित्यर्थः । लोकचेष्टकत्वयुक्त्यापिभगवतोवासुदेवस्यपूर्णानंदत्वंसमर्थयते ॥ कोहीत्यादिना ॥ तत्राकाशस्यानंदत्वाभावेऽननंप्राणनंचकस्यापिनस्यादित्येतावदुच्यते नतुविष्णोर्महानंदत्वेकोपिहेतुरुक्तइत्यतःतद्वाक्यंप्रमाणेनैवव्याचष्टे ॥ आदीप्तइति ॥ आकाशशब्दार्थोयं । आसमंतात्काशृदीप्तावितिधातोःकाशनात्दीपनात्दीप्तत्वादितियावत् । आकाशइत्यर्थः । दीप्तेरनन्याधीनत्वरूपविशेषसूचनायतुशब्दः । एषभगवान्वासुदेवः । अन्यादित्यस्यतात्पर्यंसामान्येति । सामान्यचेष्टाःलौकिकचेष्टाः । प्राण्यादित्यस्यतात्पर्यंधर्म्याइति । धर्म्याः धर्मविषयाः वैदिक्यश्चेष्टाः । तथाचासमंतात्काशनादाकाशः एषःभगवान्यदिपूर्णानंदोनस्यात् तदानकंचित्प्रवर्तयेत् । नचेदेषकंचित्प्रवर्तयेत्तदाकःपुमान्प्राण्यात्अन्याच्च । नकोपिलौकिकींवैदिकींवाप्रवृत्तिंकुर्यात् । स्वातंत्र्याभावादित्येवंविष्णोरनानंदत्वेजगतोनिश्चेष्टत्वमापादयंत्याश्रुत्याजगच्चेष्टकत्वमानंदपूर्णत्वेहेतुत्वेनविवक्षितमितिज्ञायते । तथाचभगवान्सुखीभवितुमर्हति प्रवृत्तिकारणत्रयरहितत्वेसतिप्रवृत्तिमत्त्वादुन्मत्तवदित्यनुमानंसूचितंभवति । तथाहि । लोकेचेतनप्रवृत्तिश्चतुर्विधादृष्टा । दुःखोद्रेकात्रोदनादौप्रवृत्तिः । सुखरागात्तत्प्राप्त्यर्थाभोजनादौप्रवृत्तिः । दुःखद्वेषात्तन्निवृत्त्यर्थाकंटकोद्धार

---

भाष्यं ॥ तत । आनंदमेनंसंप्राप्यमुक्तोमोदेन्नचान्यथा । आदीप्तस्त्वेपभगवान्यद्यानंदोभवेन्नच । सामान्यचेष्टाधर्म्याश्चकस्यस्युस्तमृतेप्रभुं ।

णादौप्रवृत्तिः । सुखोद्रेकात्नृत्तगानादिरूपोन्मत्तप्रवृत्तिः । तथाचदुःखोद्रेकनिमित्ता तन्निवृत्त्यर्थासुखावाप्त्यर्था चेत्याद्यंप्रवृत्तित्रयंपरमेश्वरत्वादेवतस्मिन्नोपपद्यते । अतःपरिशेषात्सुखोद्रेकादेवास्यप्रवृत्तिरितिसिध्यतीत्यभिप्रेत्योक्तप्रयोगप्रकारंसूचयति ॥ **सुखमिति** ॥ लोकचेष्टामित्युपलक्षणं । वैदिकचेष्टामित्यपिग्राह्यं । हिशब्देननृत्तगानादिरूपोन्मत्तप्रवृत्तिरन्वयव्याप्तौदृष्टांततयाप्रसिद्धेतिसूचयति । अग्निमत्त्वादेवधूमवत्त्वमित्यादाविवसुखंलब्ध्वैवकुरुतइतिसावधारणेनव्याख्यानेनोक्तहेतुहेतुमद्भावःसूचितइतिज्ञातव्यं । ननुजगच्चेष्टकत्वेनसुखमात्रसिद्धावपिनतस्यपूर्णत्वंसिध्यतीत्यतआह ॥ **अल्पादिति** ॥ अल्पसुखादेवेत्यर्थः । अल्पकर्मा अल्पप्रवृत्तिमान् । पूर्णानंदादेवेतिव्याख्येयं । सर्वकृत् महाप्रवृत्तिमान् । तथाचकारणस्यकार्यानुगुणत्वान्महाप्रवृत्त्यामहानंदएवसिध्यतीतिभावः । उक्तानुमानेव्यतिरेकव्याप्तौदृष्टांतमाह ॥ **नहीति** ॥ आर्ताःदुःखिनःकर्मनकुर्वंति प्रवृत्तिमंतोनभवंतीत्यर्थः । तथाचोभयाभावप्रयुक्तविशिष्टाभावमादायोक्तहेतुव्यतिरेकस्तेष्वस्तीतिभावः । आर्तानामपिकिंचित्प्रवृत्तिमत्त्वात्दृष्टांतांतरमाह ॥ **मुग्धाश्चैवेति** ॥ मुग्धाः मूर्छावंतः । तदानीं दुःखमात्रप्रतिस्मृत्या विशेषतः आर्तापेक्षयाविशेषाकारेणकर्मनैवकुर्वंतीतिसंबंधः । प्रवृत्तिमात्रशून्याइत्यर्थः । तथाचोभयाभावप्रयुक्तविशिष्टाभावमादायहेतुव्यतिरेकस्तेष्वप्यस्तीतिभावः । अल्पात्सुखादित्युक्तंविवृणोति ॥ **तस्मादिति** ॥ तस्मादार्तादीनांप्रवृत्त्यभावात् । यादृक्सुखं

भाष्यं ॥ सुखंलब्ध्वाहिकुरुतेलोकचेष्टांजनार्दन । अल्पात्सुखादल्पकर्मापूर्णानंदाद्धिसर्वकृत् । नह्यार्ताःकर्मकुर्वंतिमुग्धाश्चैवविशेषतः । तस्माद्यादृक्सुखंतादृक्कर्मपूर्णसुखस्ततः । सर्वकृत्त्वात्परोविष्णु.

ताहक् ताहगेव तदनुसार्येव । कर्म प्रवृत्तिः दृष्टा । अतःसर्वकर्तृत्वात्महाप्रवृत्तिमत्त्वात्परोविष्णुःपूर्णसुखइत्यर्थः । निर्मूलानुमानममानमित्याशंकापरिहारायतन्मूलभूतांश्रुतिमाह ॥ आहेति ॥ तस्मात् प्रवृत्तिकारणत्रयरहितत्वेसतिप्रवृत्तिमत्त्वस्यसुखित्वेनाविनाभावस्यप्रसिद्धत्वादित्यर्थः। सुखंलब्ध्वा सुखंलब्ध्वैव उन्मत्तादौदर्शनादितिभावः । अनेनयदावैसुखंलभतेथकरोतीतिश्रुतिमुपादत्ते । अनेनोक्तान्वयव्याप्तिःप्रमापिताभवतीतिज्ञातव्यं । सनातनी अपौरुषेयत्वेनपुरुषदोषनिबंधनदोषशून्या । अतएवपरास्मृत्यपेक्षयोत्तमेत्यर्थः । यद्वैतच्छ्रुतिसमाख्यारूपा पराअन्याछंदोगानांश्रुतिरित्यर्थः । नासुखंलब्ध्वाकरोतीतिश्रुतिमर्थतोनुवदति ॥ अलब्ध्वेति ॥ मुग्धार्तादौदर्शनादितिभावः । अनेनोक्ताव्यतिरेकव्याप्तिरपिप्रमापिताभवतीतिज्ञातव्यं । व्याप्तिद्वयोपदर्शनादादरोवगम्यतइतिभावः । कोह्येवान्यादित्युपनिषदुक्तेतर्केविपर्ययपर्यवसानंदर्शयति ॥ तदिति ॥ तत्तस्मात् कारितःप्रेरितः प्राणिति वैदिकींचेष्टांकरोति । इदमुपलक्षणं । अनितिलौकिकींचेष्टांचकरोतीत्यपिद्रष्टव्यं । तथाचसर्वोलोकस्तावल्लौकिकींवैदिकींवाचेष्टांकरोति अनुभवसिद्धत्वात् । तस्मात्पूर्णानंदवतादेवेनकारितःप्रेरितएवप्राणितिअनितिच । तथाचतत्कारयितादेवःपूर्णानंदइतिसिद्ध्यतीतिभावः । अमुक्तानांब्रह्माद्यखिललोकानांसुखकारणत्वाच्चायंभगवानानंदरूपइत्युच्यते ॥ एषह्येवेति । तद्व्याचष्टे ॥ सएवैकइति ॥ अखिलं ब्रह्माद्यंमुक्तजातं । स्वस्यैवतदभावेपरस्मैतद्दानानुपपत्तेरितिभावः । रसंह्येवे

भाष्यं ॥ आहतस्मात्सनातनी । सुखलब्ध्वाकरोतीतिच्छंदोगानांश्रुतिःपरा । अलब्ध्वातुसुखंनैवकरोतीत्यपिसादरं । तत्पूर्णानंददेवेनकारितःप्राणितिस्फुटं । सर्वलोकःसएवैकआनंदयतिचाखिलं ।

तिवाक्यंतुमुक्तानांआनंदप्रदत्वान्यथानुपपत्त्याभगवतःपूर्णानंदत्वसाधनपरमित्यपौनरुक्त्यं ॥ १५ ॥ रसंह्येवायंलब्ध्वेत्यनेनानंदरूपमेनंसंप्राप्यमुक्तोमोदेदित्युक्तं । तत्रतत्प्राप्तौकिंसाधनमित्याशंकायांप्रतिष्ठितंज्ञानमेवेत्युच्यते । यदाह्येवैषइति । तद्व्याचष्टे ॥ **तस्मादिति** ॥ तस्मात् उक्तरीत्यासर्वचेष्टकत्वेनमुक्तानामानंदप्रदत्वादिनातस्यैवस्वतंत्रत्वादित्यर्थः । ज्ञानेप्रतिष्ठितमेवमोक्षसाधनंयस्मात्तस्मादितिपूर्वटीकाकाराः । अदृश्ये अज्ञदृष्ट्यगोचरे । आत्मनःइदमात्म्यं जीवसंबंधिगुणजातं अल्पज्ञानाल्पसुखादि तद्रहितोनात्म्यस्तस्मिन्नितिअक्षरार्थमभिप्रेत्योक्तं ॥ **जैवानामिति** ॥ जीवसंबंधिनामित्यर्थः । असंगतेः संबंधाभावात् । निर्निरामयनंआश्रयोनिरयनं । निरयनमेवनिलयनं । रोलइतिस्मरणात् । नविद्यतेअन्योनिलयनंआश्रयोयस्यासावनिलयनःइत्यक्षरार्थमभिप्रेत्यतल्लब्धार्थउक्तोनिराश्रयत्वादिति । स्वाश्रयत्वादित्यर्थः । अभयमितिक्रियाविशेषणमित्यभिप्रेत्योक्तं ॥ **अभयत्वेनेति** ॥ एतादृशभगवद्विषयेप्रतिष्ठां प्रकर्षेणस्थितिं विंदतेलभते । योग्यतयाज्ञानस्येतिलाभइत्यर्थमभिप्रेत्यतत्तात्पर्यमाह ॥ **यदाज्ञानेनेति** ॥ श्रौताथशब्दार्थस्तदेति । अनेनज्ञान्येवएतदवाप्नुतइत्युकारेणोक्तस्योपसंहारोप्यनेनकृतोभवतीतिज्ञातव्यं । एवंभगवद्विषयकसम्यग्ज्ञानेनैवमोक्षमभिधायविपरीतज्ञानिनोनर्थउच्यते । यदाह्येवैषइति । तद्व्याचष्टे ॥ **यदेति** ॥ अंतरमित्यस्यार्थोभेदमिति । तस्यप्रसिद्धोदरत्वंबाधितमित्यतःउदरमित्यनूद्यभेदस्योदरशब्दवाच्यत्वेनिमित्तमाह ।

भाष्यं ॥ तस्माददृश्येजैवानांगुणानामप्यसंगते । अनात्म्येथगुणानंत्यादनिरुक्तेनिराश्रयात् । अनिलयनेऽभयत्वेनयदाज्ञानेनतिष्ठति । तदाऽभयंहरिंगच्छेन्नैवाज्ञानीकथंचन । यदैतस्मिन्परेविष्णावुदरं

**जीवगत्वतइति** ॥ तथाचजीवेषुयुगपदनेकस्थानत्वेनभेददर्शनात् तद्दृष्टांतेनतादृशभेदंयदा यदि एतस्मिन्परेविष्णौविश्वतैजसादिभगवद्रूपसमुदायेपि युगपत्दक्षिणाक्ष्यादिस्थानभेदेनकरोति धातूनामनेकार्थत्वात्जानाति अनुमिनोतीतियावत् । यद्वाजीवेषुविष्णुप्रतियोगिकभेददर्शनात्तंभेदंविश्वादिरूपेएतस्मिन्परेविष्णौकरोति विष्णुप्रतियोगिकमेवभेदंविष्णौजानातीति यावदित्यर्थइतिबृहदारण्यकभावबोधोक्तरीत्याव्याख्येयं । तर्हीतिशेषः । अस्यतेनैवभेददर्शनजातेनभगवद्द्रोहेणमहद्भयंतमआख्यमनुत्थानंभवेदित्यर्थः । ननुजीवगतत्वमुदरशब्दात्कथंलभ्यतेइत्यतस्तद्दर्शयति ॥ **अइत्युक्तइति** ॥ परोविष्णुःअइत्युक्तः अःइतिब्रह्मेतिश्रुतेरितिभावः । सएवअकारवाच्योविष्णुरेव । एभ्यःजीवेभ्यःउत्इत्यस्यार्थः उच्चइति । तथाचउत्उच्चःउत्कृष्टःअः विष्णुःयेभ्योजीवेभ्यस्तेजीवसंघाःउदाः उदशब्दवाच्याइत्यर्थः । ऋगतौअस्मात्कर्तरिअप्रत्ययेयणादेशेसतिनिष्पन्नोरशब्दःगतत्वार्थइत्यभिप्रेत्यतद्गतेत्युक्तं । जीवगतेत्यर्थः । अत्रतद्गतेत्यविभक्तिकोनिर्देशः । लुप्तविभक्तिकंवा । तथाचोदरमित्यनूद्यतद्गतेति व्याख्यानं । तद्गतमित्यर्थः । अंतरमितिश्रौतविशेष्यपदानुवादः । तद्गतांतरंउदरमुदरमंतरमित्यर्थः । तद्गतांतरमितिक्वचित्पाठः । तत्रापिरतेत्यस्यगतेत्येवार्थोद्रष्टव्यः । प्रकृतस्यैवपरब्रह्मणोविद्वदविद्वद्भयप्रदत्वरूपमहिमांतरमुच्यते । तत्वेवेति । तद्व्याचष्टे ॥ **तदेवेति** ॥ यद्विषयकसम्यग्ज्ञानेनमोक्षोयद्विषयकमिथ्याज्ञानेनांधंतमस्तदेवब्रह्म विदुषोऽविदुषश्चभयकृदित्यर्थः । स्वोक्तम

---

भाष्यं ॥ जीवगत्वत. । भेदंकरोतितेनैवभयमस्यमहद्भवेत् । अइत्युक्त.परोविष्णुरेभ्यउच्चस्सएवतु । तउदाजीवसंघास्स्युरुदरंतद्गतांतरं । तदेवब्रह्मभयकृद्विदुषः

वश्यंकर्तव्यंविदुषेत्यभिप्रेत्यस्वोक्ताकरणेभगवान्तेषांभयकृद्भवतीतिज्ञातव्यं । यथोक्तमर्जुनंप्रतिभगवतावासुदेवेन । अथचेत्त्व महंकारान्नश्रोष्यसिविनंक्ष्यसीति । अमन्वानस्येत्येतत्व्याचष्टे ॥ अविदुषइति ॥ तथा भयकृदित्यर्थः । ननुविदुषोपिभय सद्भावेअविदुषःसकाशात्तस्यकोविशेषइत्याशंकायां तुशब्दसूचितंभयेविशेषमाह ॥ विदुषइति ॥ नाविद्वद्वन्महदित्यर्थः । तस्यनिरवधिकत्वंवारयति ॥ यावदिति ॥ यावदसौमुक्तिंव्रजति तावत्पर्यंतंतस्यविदुषोल्पभयंकुर्यादितिसंबंधः । अवध्युक्त्या फलितमर्थमाह ॥ अथेति ॥ मुक्त्यनंतरमित्यर्थः । अभयं अभयप्रदं । तत्वेवभयंविदुषइत्युक्तार्थेश्लोकसंमतिरुच्यते । तदपीत्या दिना । तद्व्याचष्टे ॥ तस्मादिति ॥ यस्माद्विदुषोपि ब्रह्मभयकृत्तस्मादित्यर्थः । विशेषतोभीताः अज्ञान्यपेक्षयाविशेषतः । स्व विहितकर्माकरणेविष्णोर्विप्रीतिर्भविष्यतीतिभीताःसंतःस्वकर्मस्वोचितंपवनादिरूपंकर्म । यथोक्तमनुव्याख्याने । ज्ञानिनोपिय तोनित्यंकुर्वंतिशुभमेवहि । कृच्छ्रेणापितपोज्ञानंकर्माप्येतेचरंतिहि । नचस्वभावएवायंभयपूर्वप्रवृत्तितइति । अमन्वानस्ये त्यनेनाविदुषोपिब्रह्मभयकृदित्युक्तं । तत्रापितुशब्दसूचितंभयेविशेषमाह ॥ अमन्वानस्येति ॥ अविदुषइत्यर्थः । नुः पुरुषस्य । अमन्वानोद्विविधः । सज्जनएवोपदेष्ट्रभावेसम्यग्ज्ञानरहितोभवति यस्त्वैविद्यइत्युच्यते सएकः । मिथ्याज्ञा नीचापरः । तत्राद्यस्यपरब्रह्मकृतंभयंनामसंसारेपरिवृत्तिवेरेतिप्रसिद्धत्वान्नोक्तं । यथोक्तंगीतातात्पर्ये । समर्पयतियज्ञाद्य

भाष्यं ॥ अविदुषस्तथा । विदुषोल्पभयंकुर्याद्यावन्मुक्तिव्रजत्यसौ । अथाभयंभवेद्ब्रह्मतस्यमुक्तस्यसर्वदा । तस्माद्वाय्वादयोदेवाविद्वांसोपिविशेषतः । भीतास्स्वकर्मकुर्वंतिविष्णोःप्रीत्यर्थमंजसा । अमन्वानस्यनुर्विष्णुःकुर्यान्नित्यंमहद्भयम् । तमआख्यमनुत्थानं

मंततस्त्वेवविष्णवे । त्रैविद्यधर्मापुरुषःस्वर्गंभुक्त्वानिवर्तते । पुनःकुर्यात्पुनःस्वर्गंयातियावद्धरेर्वशे । सर्वदेवान्प्रविज्ञायतत्कमैवसदाभवेदिति । उक्तंचाथर्वणभाष्येइष्टापूर्तमितिश्रुतिव्याख्यानावसरे। इमंलोकमित्यज्ञविषयमिति । अपरस्त्वेतत्प्रमाणोक्तंफलमितिज्ञातव्यं। अज्ञोहिनैवैतदाप्नोति । ज्ञान्येवहितद्गुणोत्कर्षज्ञानसाध्यप्रसादद्वारातदवाप्नुतइत्युक्तेतज्ज्ञानंकीदृशंविवक्षितमितिशंकायां सृष्टिकर्तृत्वादिरूपगुणोत्कर्षज्ञानमेवप्रसादद्वारामोक्षसाधनमित्यभिप्रेत्य सोकामयतेत्यारभ्यमृत्युर्धावतिपंचमइत्यंतेनग्रंथेनभगवत्सामर्थ्यंप्रतिपादितं। तस्योक्तरीत्याप्रकृतोपयोगंदर्शयन् उपनिषदभिप्रेतमर्थमुपसंहरति ॥ विदुषामिति ॥ सोकामयतेत्यारभ्योक्तभगवत्सामर्थ्यविदुषामित्यर्थः । इतिसिद्धमितिशेषः । उत्तरवाक्योपक्रमोवायं ॥ १६ ॥ तत्रश्चायंअथातोनुप्रश्नाइत्यादेरयमक्षरार्थः ॥ अथशब्दःप्रकरणांतरारंभद्योतनार्थः । एवमन्नमयादिपंचरूपनिरूपणानंतरंप्रकरणांतरमारभ्यते। अतः ब्रह्मविदाप्नोतिपरमितिवाक्येनब्रह्मविदःपरब्रह्मप्राप्तेरुक्तत्वात्तच्छ्रुतवतावरुणेनचतुर्मुखंप्रतिकृताः अनुप्रश्नाः तत्वनिर्णयानुकूलाःप्रश्नाःकथ्यंते। तानेवविशदयति ॥ उतेति ॥ ब्रह्मविदितिनिरवधारणोक्तेः । कश्चनअविद्वानुत। एकवचनंबहुवचनार्थे। अज्ञानिनोपिप्रेत्यमृत्वाअमुंलोकंपरलोकं । वैकुंठादिस्थंपरब्रह्मेतियावत्। गच्छति। गच्छंतिप्राप्नुवंति। अविद्वानपिअमुंलोकंप्रति प्रेत्य प्रकर्षेणगत्वा ब्रह्मगच्छतीतिवार्थः। आहोस्वित्विद्वान् ज्ञानिनएवामुंलोकंप्रेत्यगच्छंतीत्येवंद्विकोटिकएकःप्रश्नः । ज्ञानिनएवब्रह्मप्राप्नुवंतीतिपक्षेपिसर्वेपिज्ञानिनोब्रह्मप्राप्नुवंति अथकेचनैवेतिद्विकोटिकोद्वितीयःप्र

भाष्यं ॥ विदुषां ॥ १६ ॥ ॥ उप० ॥ अथातोनुप्रश्ना. । उताविद्वानमुंलोकंप्रेत्य । कश्चनगच्छती३ । आहोविद्वानमुंलोकंप्रेत्य ।

श्रोऽध्याहार्यः । सर्वेपिज्ञानिनोब्रह्मप्राप्नुवंतीतिपक्षेपिकिंसर्वेपिज्ञानिनोब्रह्मसम्यक्समाप्नुवंति मुक्तौब्रह्मप्राप्ताःसर्वेपिसमाइति
यावत् । उतकश्चिदेवज्ञानीसमश्नुता सम्यक्अश्नुत अश्नुते प्राप्नोति । दीर्घस्त्वाधिक्यार्थः । इतिपृष्टःसन्ब्रह्माप्रोवाचेतिग्रा
ह्यं । तत्राज्ञानिनोब्रह्मनैवाप्नुवंति । तमेवंविद्वानमृतइहभवतीत्यादिवचनविरोधात् । तस्माज्ज्ञानिनएवब्रह्मप्राप्नुवंति । तत्रापि
अखिलाअपिज्ञानिनोब्रह्माप्नुवंति । नकेचिदेव । अन्यथाअनियमःसर्वेषां नकश्चिद्ब्रह्मवित्सृतिमनुभवतीत्यादिप्रमाणविरोधा
त् । तत्रापिसर्वज्ञानिनोनसम्यक्ब्रह्मसमाप्नुयुः किंतु सम्यक्प्राप्तिर्विरिंचस्यैवसर्वदा । अन्येषांतारतम्येनतत्प्राप्तिरित्यभिप्राये
णसमासेनोत्तरमाह ॥ उइति ॥ कश्चिदेवसम्यक्तदाप्नुयादितियदुक्तं तत् उ तथैवेत्यर्थः । कश्चित्समश्नुताइत्येतद्वाक्यानं
तरमेवोक्तत्वादुकारउक्ताभिप्रायकइतिज्ञातव्यं ॥ १३ ॥ एवंसमासेनोत्तरमुक्त्वाअज्ञोनैवैतदाप्नोति ज्ञान्येवैतदाप्नुते तत्रापिक
श्चिदेवसम्यक्अश्नुतइत्येतद्विस्तरेण यदाह्येवैषइत्यादिनावक्तुं ब्रह्मावाप्तिरूपोमोक्षस्तावत्तत्प्रसादादेवभवति प्रसादश्चस्वातंत्र्या
दिरूपमाहात्म्यज्ञानसाध्यइत्याशयेनाधिकारिणोमोक्षसाधनीभूतप्रसादोत्पादनायज्ञातव्यतयासृष्टिकारणत्वादिरूपमाहात्म्यमु
च्यतेउत्तरप्रकरणेन । यद्वाज्ञान्येवैतदाप्नुतेइत्युक्तं । तत्रब्रह्मज्ञानंनामकीदृशंविवक्षितमितिशंकायां जगत्स्रष्टृत्व तत्प्रवेष्टृत्व सर्व
देवादिभयप्रदत्वमुक्तिप्रदत्वादिनारूपेणज्ञानमेवब्रह्मज्ञानंविवक्षितमित्याशयेनब्रह्मणःसृष्टिकारणत्वादिरूपंमाहात्म्यमुच्यते उ
त्तरप्रकरणेन । तत्रब्रह्मणस्सृष्टिकारणत्वंनोपादानत्वेन किंतुकुलालादिवन्निमित्ततयैवेत्यभिप्रेत्य सृष्ट्यपेक्षयापूर्वभाविनंव्यापा

उप० । कश्चित्समश्नुता३उ ॥ १३ ॥

रमाह ॥ **सोकामयतेत्यादिना** ॥ सःप्रलयकालगोनारायणोऽकामयत । कामनाप्रकारमेवाह ॥ **बहुःस्यामिति** ॥ अहमा दौप्रजायेय वासुदेवादिरूपेणप्रादुर्भवानि । नियम्यंजगच्चस्यात् तदनंतरंत्यदादिशब्दवाच्यश्रीब्रह्मादिजगन्नियामकतयाहं बहुरूपःस्यांइत्यकामयत। एवंकामनानंतरं सप्रलयकालगोनारायणस्तपोतप्यत। ज्ञानात्मकंतपश्चकार । स्वोदरस्थंजगद्दर्शेतिया वत् । सतपस्तप्त्वा स्वोदरस्थंजगत्दृष्ट्वावासुदेवादिरूपोऽभवदितिवक्तव्यं । इत्थंविचिंत्यपरमःसतुवासुदेवनामाबभूवनिजमुक्ति पदप्रदातेत्यादिवचनात् । अनंतरंयदिदंकिंचित्जगत्सत्त्यदादिशब्दवाच्यं तदिदंसर्वमसृजत । वासुदेवादिरूपेणस्वोदरात्बहि र्निष्कास्यवियदधिकरणव्युत्पादितावांतरविशेषवदकरोदित्यर्थः । तत्सृष्ट्वा तन्नियामकतयास्वयमप्यनिरुद्धादिबहुरूपोभूत्वासृ ष्टंतदेवजगदनुप्राविशत् । तत्सत्त्यदादिशब्दवाच्यंजगदनुप्रविश्य । स्वयमपिसच्चत्यच्चाभवत् । स्वयमपिसत्त्यदादिशब्दवा च्योभवदित्यर्थः । तत्रत्यदनिरुक्तनिलयनविज्ञानसत्यशब्दैः प्रकृतिचतुर्मुखप्राणाख्यंजगदुच्यते । तत्रस्थोहरिस्ततत्वेसतिनि यामकत्वा वाच्यत्व सर्वाधारत्व सर्वविज्ञान साधुगुणस्वरूपत्व निमित्तैः प्रकृत्यादिगतततत्वादिप्रेरकतयामुख्यतस्त्यदादिश ब्दवाच्योभवत् । प्रकृत्यादित्रितयभिन्नंजगदवसादनात्सदित्युच्यते । सुवाच्यत्वान्निरुक्तं । दौर्बल्येनसर्वाधारत्वाभावादनिल यनं । असर्वज्ञत्वादविज्ञानं । असाधुत्वादनृतं । ऋतशब्दपर्यायस्यसत्यशब्दस्यसाधुत्वार्थकत्वात् । यद्वाअनेनचेष्टके

उप० । सोकामयत । बहु.स्यांप्रजायेयेति । सतपोतप्यत । सतपस्तप्त्वा । इद५्ंसर्वमसृजत । यदिदंकिंच । तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्चत्यच्चाभवत् । निरुक्तंचानिरुक्तंच । निलयनंचानिलयनंच । विज्ञानंचाविज्ञानंच ।

नहरिणाकृतत्वात्गतत्वात्प्रविष्टत्वादनृतं । अवसादनादिकर्तृत्वात्तदंतर्गतोहरिरेवमुख्यतस्तच्छब्दवाच्योभवदित्यर्थः । यथोक्तमनुव्याख्याने । सच्चत्यच्चाभवदितिनास्यविश्वत्वमुच्यते । जगद्गतेनरूपेणब्रह्मैवहितथोच्यतइति । एवंसर्वत्र स्थितस्यहरेर्नतत्प्रयुक्तलेपोस्तीत्याह ॥ **सत्यमभवदिति** ॥ सर्वत्रास्थितोपिहरिःसत्यं साधुगुणस्वरूपः मंगलस्वरूपएवा भवत् । न तत्प्रयुक्तलेपवानित्यर्थः । नन्ववसादसुवाच्यत्वदौर्बल्याज्ञत्यसाधुतानाममंगलत्वात्तन्निमित्तकसदादिशब्दवाच्य त्वंकथंयुक्तमित्यतआह ॥ **यदिदंकिंचतत्सत्यमित्याचक्षतइति** ॥ सन्निरुक्तादिशब्देनयदिदंकिंचभाषितं अवसादना दिकर्तृत्वं तत्सर्वं सत्यं साधु मंगलरूपमेवेत्याचक्षते विद्वांसइत्यर्थः । अवसादाद्यधिकरणत्वस्यैवासाधुत्वात्तस्यचास्माभिरन भिप्रेतत्वादितिभावः । यथोक्तंस्वातंत्र्यापेक्षयाविष्णौदोषोनामंगलोक्तितइति । नन्वत्रसच्चत्यच्चाभवदितिवचनात्ब्रह्मणोऽवसाद नकर्तृत्वतत्वनियाकत्वादिगुणजातंसादीतिप्राप्नोति । तच्चप्रमाणविरुद्धं अतःकथं अभवदितिप्रयोगइतिचेत् अस्त्यत्रसंप्रदाय विशेषः । ब्रह्म मूर्तामूर्तात्मकंविश्वंसृष्ट्वातत्प्रेरकत्वेननानारूपैस्तदेवविश्वंप्रविश्यप्राक्सृष्टेरुपदेष्टॄणांउपदेश्यानांचशरीरेंद्रियवता मभावादप्रतीतगुणकंसदथेदानीमुपदेष्टॄणामुपदेश्यानांचशरीरेंद्रियवत्त्वेसतिप्रतीतगुणकंभवति । तदपेक्षयाऽभवदितिप्रयोगइ तिद्रष्टव्यं । तदनेनपारमेश्वरीसृष्टिर्योग्यानांस्वगुणज्ञानार्थेत्युक्तंभवति । यथोक्तंभगवत्पादैः । सोयंविहारइहमेतनुभृत्स्वभाव संभूतयेभवतीति । सोयंमेसृष्ट्यादिरूपोविहारःक्रीडा तनुभृतांयोग्यानां स्वस्यस्वतंत्रस्यममयेभावाःधर्माः ततत्वादिगुणा

उप० ॥ सत्यंचानृतंचसत्यमभवत् । यदिदंकिंच । तत्सत्यमित्याचक्षते ॥ १४ ॥

स्तेषांसंभूतयेज्ञानायभवतीतितदर्थः । यथोक्तमनुव्याख्याने । व्यक्तिरुक्तगुणानांहिपुरुषापेक्षयानृणां । भवेदभवदित्यस्मात्प्रयोगश्चात्रयुज्यतइति ॥ १४ ॥ पूर्वंप्रलयकालगोनारायणोवासुदेवादिरूपेणप्रजायेयेतिकामनांकृत्वावासुदेवोभूत्वाजगत्ससर्जेत्युक्तं । तत्रसंमतितयाश्लोकमुदाहरतिब्रह्मा ॥ तदप्येति ॥ तदपितत्रापि नारायणस्यवासुदेवादिरूपेणभवने एषःवक्ष्यमाणःश्लोकोभवति। तंश्लोकंपठति ॥ असद्वेति ॥ इदमग्रे अस्यजगतोग्रे प्रलयइतियावत् । असद्वा अनासाद्यत्वात्अपरिच्छिन्नत्वेनकेनाप्यप्राप्यत्वादसन्नामकनारायणएवआसीत् । ततोनारायणात् सत् ज्ञानिप्राप्यत्वात्सन्नामावासुदेवोऽजायत । तद्रूपंव्यक्तमभवत् । तस्यैववासुदेवरूपस्यसुकृतमितिनामांतरंवक्तुंतत्रनिमित्तमाह ॥ तदिति ॥ तद्वासुदेवरूपं आत्मानंस्वात्मानं स्वयंस्वेच्छयैव संकर्षणादिरूपेणाकुरुत । यस्मात्तस्मादेवहेतोस्तद्वासुदेवरूपंसुकृतमित्युच्यते । सुसम्यक्संकर्षणाद्यात्मनास्वस्वरूपंकृतमितिव्युत्पत्त्येत्यर्थः । इतिश्लोकोभवतीतिसंबंधः । यद्वैतत्सुकृतं सुकृतनामकंवासुदेवरूपं सःरसः रसानंदः रसशब्दोहिवरत्ववाची । रसःसारोवरश्चेत्यभिधानात् । तथाचरसआनंदोवरानंदः । आनंदस्यवरत्वंनागमहत्त्वं पूर्णत्वमितियावत् । तथाचपूर्णानंदइत्यर्थः । यद्वायद्वैतत्सुकृतं सः तदीयः आनंदोरसोवरःपूर्णइत्यर्थः । ननुभगवतःपूर्णानंदत्वेकिंमानमित्याशंक्यमुक्तानांसुखकारणत्वादयंपूर्णानंदइत्याह ॥ रसमिति ॥ हियस्माद्रसं पूर्णानंदमेनंवासुदेवंलब्ध्वैवप्राप्यैव अयंमुक्तआनंदीभवति स्वयोग्यानंदपूर्णोभवति ।

---

उप० ॥ तदप्येषश्लोकोभवति । असद्वाइदमग्रआसीत् । ततोवैसदजायत । तदात्मानंस्वयमकुरुत । तस्मात्तत्सुकृतमुच्यतइति । यद्वैतत्सुकृतं । रसोवैसः । रसंह्येवायंलब्ध्वानंदीभवति ।

अन्यथातन्नस्यात्। नहिदुःखिनंप्राप्तस्यानंदोदृश्यतइत्यर्थः । तथाचायंवासुदेवःपूर्णानंदोनस्यात् यदि तर्हितंप्राप्तोमुक्तोपि पूर्णानंदोनस्यात् लोकेदुःखिनंप्राप्तस्यानंदादर्शनात् । भवतिचमुक्तःपूर्णानंदः । ज्योतिर्मयेषुदेहेषुस्वेच्छयाविश्वमोक्षिणः। भुंजतेसुसुखान्येवनदुःखादीन्कदाचनेतिवचनात्। अतस्तत्प्राप्योवासुदेवोपिपूर्णानंदइतिसिध्यतीतिभावः । लोकचेष्टकत्वा न्यथानुपपत्तिरूपयुक्त्यापिभगवान्वासुदेवःपूर्णानंदइत्याह ॥ कोह्येवान्यादिति ॥ आसमंतात्काशनादीप्तत्वादाकाशना माएषःभगवान्वासुदेवोयदिपूर्णानदोनस्या त्तदाप्रवृत्तौकारणतया रोदनभोजनकटकोद्धरणादौप्रसिद्धानां दुःखोद्रेकसुखरा गदुःखद्वेषरूपाणामभावात् असौनकंचित्प्रवर्तयेत्। नचेदेषप्रवर्तयेत् तदाकःपुमान्प्राण्यादन्याच्च नकोपिवैदिकीलौकिकीवाप्र वृत्तिंकुर्यात् । स्वातंत्र्याभावात् । प्राणितिचानितिसर्वोलोकोतस्तत्प्रवर्तकोभवन्एषभगवान्केवलमुन्मत्तवदानंदोद्रेकादेवेति वक्तव्यं। कार्यानुगुणत्वाच्चकारणस्यमहाप्रवृत्त्यामहानंदएवसिध्यतीत्यर्थः। तथाचैषभगवान्पूर्णानंदोभवितुमर्हति प्रवृत्तिकारणत्र यरहितत्वेसतिप्रवृत्तिमत्त्वात् उन्मत्तवत् व्यतिरेकेणार्तवन्मुग्धवदितिसाधनानुमानंद्रष्टव्यं । अमुक्तानांब्रह्माद्यखिललोकानामानं दकारणत्वाच्चायंभगवान्पूर्णानंदइत्याह॥एषह्येवेति॥ अखिलमितिशेषः। हियस्मादेषएवभगवानखिलंब्रह्माद्यमुक्तजातं। आनंद यातिआनंदयति। दीर्घस्त्वाधिक्यार्थः। अतोयंभगवान्वासुदेवःआनंदपूर्णइत्यर्थः । स्वस्यैवतदभावेपरस्मैतद्दानानुपपत्तेरितिभा वः॥१५॥ रसंह्येवायंलब्ध्वानंदीभवतीत्यनेन आनंदमेनंसंप्राप्यमुक्तौमोदेन्नचान्यथेत्युक्त। तत्प्राप्तौकिंसाधनमितिशकायांप्रतिष्ठि

उप० ॥ कोह्येवान्यात्क प्राण्यात्। यदेषआकाशआनंदोनस्यात्। एषह्येवानंदयाति ॥ १५ ॥

तंज्ञानमेवेत्याह ॥ यदाह्येवैषइति ॥ यदैवएषोधिकारी अदृश्ये अज्ञदृष्टयगोचरे अनात्म्येआत्मनइदंआत्म्यं जीवसंबंध्यल्पज्ञानाल्पसुखादिगुणजातं तद्रहिते अनिरुक्ते अनंतगुणवत्त्वेनसाकल्येनवेदाप्रतिपाद्ये अनिलयने नविद्यतेअन्योनिलयनंआश्रयोयस्य सोनिलयनस्तस्मिन्अनिलयने निजाश्रयादपराश्रयरहितेएतस्मिन्हरौ तद्विषयइतियावत् । अभयं क्रियाविशेषणमेतत् । अभयं यथाभवतितथा अभयत्वेनेतियावत् । ज्ञानस्येतिशेषः । प्रतिष्ठां ज्ञानस्यप्रकर्षेणस्थितिं विंदतेलभते निर्भयतयाभगवद्विषयकज्ञानीभवति । अपरोक्षज्ञानीभवतीतियावत् । अथतदा सोधिकारी प्रसारद्वाराअभयंहरिंगतःप्राप्तोभवति मुक्तोभवतीत्यर्थः । हिशब्देनज्ञानप्रसादयोःप्रसादमोक्षयोश्चसाध्यसाधनभावो ज्ञानीप्रियतमः । यस्यप्रसादादित्यादिप्रमाणप्रसिद्धइत्याचष्टे ॥ एवंभगवद्विषयकसम्यग्ज्ञानेनैवमोक्षमभिधाय विपरीतज्ञानिनोनर्थमाह ॥ यदेति ॥ यदायदि एषोधिकारी उदरं अःविष्णुः येभ्यःजीवेभ्यः उत्उच्चः उत्कृष्टः तेजीवसंघाः उदाः तेषु रः ऋगतावितिधातोः गतःस्थितउदरस्तंउदरं जीवगतमित्यर्थः । जीवेषुयुगपदनेकस्थानेषुभेददर्शनात्तदृष्टांतेनतादृशंअंतरंभेदं एतस्मिन्परेविष्णौ विश्वतैजसादिभगवद्रूपसमुदायेपियुगपत् दक्षिणाक्ष्यादिस्थानभेदेनकरोति, अनेकार्थत्वाद्धातूनां जानाति अनुमिनोतीतियावत् । यद्वा उदरं उत्करीत्याजीवगतं अंतरं विष्णुप्रतियोगिकंभेदं एतस्मिन्विष्णौकुरुते रामकृष्णादिरूपेविष्णावेवविष्णुप्रतियोगिकंभेदंजानातीत्यर्थः । अथतर्हि

उप० । यदाह्येवैषएतस्मिन्नदृश्येनात्म्येऽनिरुक्तेऽनिलयनेऽभयंप्रतिष्ठांविंदते । अथसोऽभयंगतोभवति । यदाह्येवैषएतस्मिन्नुदरमंतरंकुरुते । अथतस्यभयंभवति ।

तस्यभयं महद्भय मनुत्थानं तमआख्यंमहाभयंकरस्थानंभवतीत्यर्थः । नस्थानतोपिपरस्योभयलिंगंसर्वत्रहि नभेदादितिचेन्न प्रत्येकमतद्वचनात् । ऐश्वर्याद्रूपमेकंचसूर्यवद्बहुधेयते । प्रतिदृशमिवनैकधार्कमेकंसमधिगतोस्मिविधूतभेदमोहइत्यादिवचनविरुद्धत्वेनभगवद्रूपेषुभेदज्ञानंतावन्मिथ्याज्ञानं । मिथ्याज्ञानिनश्च अंधंतमःप्रविशंतियेविद्यामुपासते । अन्यथोपासकायेतुतमोंधंयांत्यसंशयमित्यादिवचनादंधंतमःप्राप्तिर्भवतीतिप्रसिद्धमितिहिशब्दार्थः । प्रकृतस्यैवपरब्रह्मणोविद्वदविदुषोर्भयप्रदत्वरूपंमहिमांतरमाह ॥ तत्त्वेवेति ॥ यद्विषयकसम्यग्ज्ञानेनमोक्षो यद्विषयकमिथ्याज्ञानेननार्थस्तदेवब्रह्म विदुषोज्ञानिनोवाय्वग्नींद्रादिदेवजातस्य यावन्मुक्ति भयंभयप्रदं भवति स्वाज्ञाया अकरणइत्यर्थः । भयेस्वल्पत्वरूपविशेषसूचकस्तुशब्दः । नाविद्वद्वन्महदित्यर्थः । अमन्वानोपिद्विविधः सज्जनएवोपदेष्टृभावप्रयुक्ताज्ञानवान् त्रैविद्यकसंज्ञकएकः । मिथ्याज्ञानीचापरः । तत्राद्यस्यामन्वानस्यतदेवब्रह्म भयं संसारेपरिवृत्तिलक्षणभयप्रदंभवति । भयेमिथ्याज्ञानिभयापेक्षयास्वल्पत्वरूपविशेषद्योतकोत्रतुशब्दः ॥ तथाअमन्वानस्यमिथ्याज्ञानिनोपितदेवब्रह्म भयकृत् तमआख्यमहाभयकृद्भवति । तस्मिन्भये अनुत्थानरूपविशेषसूचनाय तुशब्दः । यथोक्तंभाष्ये । तुशब्दोनुत्थानवाचीति । तत्वेभयंविदुषइत्युक्तार्थेसंमतितयाश्लोकमुदाहरति ॥ तदपीति ॥ तत्रापि ब्रह्मविदुषांभयप्रदमित्युक्तार्थेपि एषवक्ष्यमाणःश्लोकोभवति । तमेवश्लोकंपठति ॥ भीषेति ॥ भीट्शब्दस्यतृतीयैकवच

---

उप ॥ तत्त्वेवभयंविदुषोऽमन्वानस्य । तदप्येपश्लोकोभवति । भीपास्माद्वात.पवते । भीषोदेतिसूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावतिपंचमइति ॥ १६ ॥

नंभीषेति । अस्मादितिपंचमीषष्ठ्यर्थे । अस्यभगवतोभीषाभयेनवातोभूतवाय्वभिमानीप्रवहःपवते पवशुद्धौ । तृणपर्णादिसंमाजनेनभूशुद्धिंकरोतीत्यर्थः । भीषोदेतिसूर्यः । अस्मादित्यनुवर्तते । उदितोभूत्वाध्वांतंविनाश्यपदार्थान्प्रकाशयतीतिग्राह्यं । अग्निश्चेंद्रश्चेत्युभौपचनवर्षणरूपस्वव्यापारंकुरुतइतिशेषः । अस्यभीषा पंचमः पंचत्वसंख्यापूरकोमृत्युर्यमः प्रजासंयमनादिरूपेस्वव्यापारेधावति अतीवतत्रजागरूकस्तिष्ठतीत्यर्थः । इदमुपलक्षणं । एवंसर्वेदेवाःअस्यभीषैवस्वव्यापारान्कुर्वंतीतिग्राह्यं । इतिश्लोकोभवतीतिसंबंधः ॥१६॥ **अथभाष्यार्थः** ॥ सर्वेपिज्ञानिनोब्रह्मप्राप्नुवंति । तत्रापिसम्यक्प्राप्तिर्ब्रह्मणएवान्येषांतुतारतम्येनेतिउकारेणसमासतःकथितमेवप्रश्नोत्तरंविस्तारेणमुक्तानंदतारतम्यकथनपूर्वकंवक्तुंसैषानंदस्येत्यादिकोग्रंथः । तंव्याख्यातुमाह ॥ **विदुषामिति** ॥ सैषेत्यादिव्याचष्टे ॥ **तत्रापीति** ॥ मोक्षेपीत्यर्थः । विचित्रता तरतमभाववत्त्वेत्यर्थः । युवास्यादित्यादिकंव्याचष्टे ॥ **यस्त्वित्यादिना** ॥ साधुयुवन्शब्दार्थःसाधुगुणैर्युक्तइति । निर्दुष्टत्वंसाधुशब्दार्थः । तथाचदुःखसंभिन्नत्वाद्यनित्यत्वादिदोषशून्याःयेआनंदाद्याःगुणास्तैर्युक्तइत्यर्थः । यद्यपिसाधुनाविष्णुनायुक्तोमुक्तसाधुयुवामतइत्यनुव्याख्यानेव्याख्यातं । तथापिइदंव्याख्यानांतरमित्यदोषः । तृतीयांतेसाधुशब्देउपपदे युमिश्रणइत्यस्मादन्येभ्योपिदृश्यतइतिक्वनिप्प्रत्ययेकृतेसाधुयुवन्निितिप्रातिपदिकंसिध्यति । यद्वायुजिर्योगइत्यस्मात्क्वनिप्प्रत्ययेसतीदंरूपं । दृशिग्रहणसामर्थ्याद्धातोरंतलोपोज्ञातव्यः । ननुतस्येयंपृथिवीसर्वावित्तस्यपूर्णास्यादितिवित्तपरिपूर्णपृथिवीपतित्वमुच्यमानंकथंमुक्तस्ययुज्यतेइत्यतआह ॥ **तस्यैवेति** ॥



भाष्यं ॥ विदुषांनियमेनतु । स्यादेवमोक्षस्तत्रापिह्यानदस्यविचित्रता । यस्तुसाधुगुणैर्युक्तस्तस्यैवाप्यखिलामही ।

यस्तुसाधुगणैर्युक्तोमुक्तस्तस्यैवमुक्त्यपेक्षयापूर्वसंसारेअखिलामहीअधीनतयातिष्ठतीत्यर्थः । मुक्तामुक्तक्षितिपविवक्षयाहियुवा स्यादित्यादिकमारब्धं । तत्रयुवास्यादित्यादिनामुक्तंप्रतिपाद्य अमुक्तविवक्षयातस्येत्यादिवाक्यंप्रवृत्तंयतोतोयुज्यतइति भावः । यथोक्तमनुव्याख्याने । तस्येयंपृथिवीत्यादिपूर्वभावव्यपेक्षयेति । नन्वेवंयुवास्यादित्यादेर्मुक्तामुक्तविषयकत्वांगीकृता वेकविषयताप्रतीतिविरोधइतिचेन्न । एकएवहिचेतनोयुवादिशब्दैःप्रतिपाद्यते । तस्यचावस्थाभेदेनविशेषणानिव्यवस्थाप्यंते । तस्मादेकविषयताप्रतिभासोनानुपपन्नः । अतएवानुव्याख्यानेऽमुक्तव्यपेक्षयेतिवक्तव्येपूर्वभावशब्दःप्रयुक्तः । तेनपूर्वावस्थावा चिनोक्ताभिप्रायसूचनादित्यवगंतव्यं । अतएवचक्रवर्ती चक्रंराष्ट्रेसुदर्शने । आज्ञायांसमुदायेचेत्यभिधानात् चक्रंराष्ट्रंयस्यचक्रे आज्ञायांवर्ततेसचक्रवर्ती । आध्यायकशब्दार्थमाह ॥ यदेति ॥ तदेतिशेषः । तुशब्दएवार्थे । अधीतिरध्ययनं । अध्यायश ब्दोयद्यपिआङ्अधिपूर्वात्इङध्ययनइत्यस्मात्खल्प्रत्ययेसतिनिष्पन्नःसम्यगध्ययनस्यकर्तारमाह । तथापिअत्रपुरुषार्थप्रसंगाद ध्ययनमात्रस्यचापुरुषार्थत्वादध्ययनफलप्राप्तेर्लक्षकोवर्णनीयः । अध्ययनफलंचतेनमुक्तेनैवपूर्णंप्राप्तं मुक्तेरेवतत्फलत्वात् । ते नकारणेन यदासंसृतेर्लिंगशरीरान्मुक्तस्तदैवाध्यायकइतीरितइत्यर्थः । युवास्यादित्यत्रयुवशब्दार्थमाह ॥ सएवेति ॥ संसृते र्मुक्तएव युमिश्रणइत्यस्मात्क्विपिनिष्पन्नस्ययुधातोरर्थोयुक्तइति । योग्यतयाविष्णुनेत्यस्यलाभः । बाधात्वर्थउक्तोगच्छतीति । वागतिगंधनयोरितिधातोः । तथाचभगवत्सामीप्यलक्षणमोक्षवान्युवेत्युच्यतेइत्युक्तंभवति । साधुयुवन्शब्दादप्यतिशयेनयु

भाष्यं । त्रेतायुगेचक्रवर्तीयदामुक्तस्तुसंसृतेः । अधीतिफलपूर्णत्वादाध्यायकइतीरित । सएवविष्णुनायुक्तोगच्छतीतियुवास्मृत ।

वशब्दोमुक्तस्यज्ञापकइतिभावेनक्रममुलंघ्यपश्चाद्व्याख्यातः । यद्यपि यौवनंनि त्यमेतस्यमुक्तस्येतियुवासचेति अनुव्याख्याने व्याख्यातं तथापीदंव्याख्यानांतरमित्यवगंतव्यं । सएकोमानुषआनंदइत्यस्यार्थमाह ॥ एकानंदेति ॥ यदापूर्वंचक्रवर्तित्वावस्थायांसर्वभोगसंपन्नोभूत् सर्वैर्मानुष्यकैर्भोगैःसंपन्नतमइतिबृहदारण्यवाक्यात् । तदायावानानंदोस्ति अभिव्यक्ततावदानंदस्वरूपोमुक्तइत्यर्थः । ससर्वोप्यानंदएकत्वेनविवक्ष्यते । उत्तरत्रशतगुणानंदादिगणनानुकूलत्वेनेत्याशयेनएकानंदस्वरूपमित्युक्तमितिज्ञातव्यं । अत्रमानुषोमुक्तः क्षितिपः तदवरोमनुष्योत्तमोनोक्तः सोत्रग्राह्यः । अन्येभ्योपिविमुक्तेभ्यआनंदश्चक्रवर्तिनां । मुक्तानांहिशतोद्रिक्तइतिबृहदारण्यकभाष्येउक्तत्वात् । तथाचसक्षितिपानंदोवस्तुगत्याविचार्यमाणोमनुष्योत्तमानामानंदापेक्षयाशतगुणितएवेतिज्ञातव्यं । शतोद्रिक्तइतिबृहद्भाष्योक्तेः । तेयेशतंमानुषाआनंदाः सएकोमनुष्यगंधर्वाणामानंदइतिवाक्यं व्याचष्टे ॥ तस्मादिति ॥ अत्रगुणशब्दोगुणनपरः । तथाचाभिव्यक्तक्षितिपानंदापेक्षयाशतगुणितानंदवंतइत्यर्थः ॥ १७ ॥ श्रोत्रियस्येतिवाक्यंधर्म्यंतरसमुच्चायकचशब्दबलादेकवचनप्रयोगाच्चप्रकृतमुक्तमनुष्यगंधर्वभिन्नविरक्तपुरुषपरमित्यन्यथाप्रतीतिनिरासायव्याचष्टे ॥ मुक्त्येति ॥ मुक्तत्वेनेतियावत् । संपूर्णश्रुतिफलंप्राप्तएवहिश्रोत्रियः । सचमुक्तएवनान्यः । मुक्तेरेवतत्फलत्वादित्यर्थः । ततोमुक्तत्वादेव । कामाहताः अवाप्तकामत्वेनकामकृतोपद्रवशून्याइत्यर्थः । तथाचचशब्दःप्रकृतानांमुक्तमनुष्य

भाष्यं ॥ एकानंदस्वरूपोसौमानुषोमुक्तइष्यते । तस्माच्छतगुणानंदागंधर्वामानुषात्मकाः ॥ १७ ॥ मुक्त्या(क्ता)श्रुतिफलंप्राप्तास्तत कामाहतास्तथा ।

तत्वाच्चेतिविरोधपरिहारोद्रष्टव्यः । तेयेशतंमनुष्यगंधर्वाणामानंदाः । सएकोदेवगंधर्वाणामानंदइतिवाक्यंव्याचष्टे ॥ **तेभ्य इति** ॥ येदेवैर्मुख्यतःस्वमुखतएवप्रेष्याःतेदेवगंधर्वाः । तेभ्योमुक्तमनुष्यगंधर्वेभ्यःशतगुणितानंदाइत्यर्थः । मनुष्यगंधर्वाणामपि देवप्रेष्यत्वान्मुख्यतइत्युक्तं । तथाचदेवगंधर्वद्वारेणैवदेवप्रेष्याः । नदेवगंधर्ववत्स्वमुखेनैवेत्यर्थः । यथोक्तं । देवैःस्वमुखतःप्रेष्या देवगंधर्वशब्दिताः । तद्द्वाराप्रेषणीयायेगंधर्वामानुषास्तुतइति । तेयेशतंदेवगंधर्वाणामानंदाः । सएकःपितृणामित्यादिवाक्यं व्याचष्टे ॥ **मुक्तेभ्यइति** ॥ तेयेशतंपितृणांचिरलोकलोकानामानंदाःसएकआजानजानामित्यादिवाक्यंव्याचष्टे ॥ **तेभ्यइति** ॥ शताधिकाइतिवर्तते । तासांलक्षणमाह ॥ **अनाख्याताइति** ॥ नामविशेषेणाप्रसिद्धाइत्यर्थः । आजानदेवताआजानजदेवताः । तेयेशतमाजानजानांदेवानामानंदाः सएकःकर्मदेवानामित्यादिव्याचष्टे ॥ **ताभ्यइति** ॥ अग्र्याः शताधिकाइत्यर्थः । कर्म देवताशब्दनिर्वचनपरं येकर्मणादेवानपियंतीतिवाक्यंव्याचष्टे ॥ **अंतरेति** ॥ देवाःदेवत्वोपेताःइत्यर्थः । तेषांभावोदेवता । तस्यभावस्त्वतलाविति स्मरणात् । सृष्ट्यादौनदेवत्वंप्राप्ताः किंतुअंतरासृष्टिमध्यएव कर्मणाप्राप्तदेवत्वोपेताइत्यर्थः । एतादृशाः कइत्यतोबल्याद्याइत्युदाहृतं । बलिर्हिवामनाययज्ञेकृत्स्नांमहींदत्वातन्महिम्नासावर्णिनाम्निउत्तरमन्वंतरेस्वर्गाधिपत्यंलब्धवा

---

भाष्यं ॥ तेभ्यश्शतगुणानंदादेवप्रेष्यास्तुमुख्यतः । येतेहिदेवगंधर्वामुक्तेभ्यस्तेभ्यएवच । शताधिकाहिपितरस्तेभ्यआजानदेवता । अनाख्यातादेवतास्तुजातादेवकुलेचयाः । आजानदेवतास्ताहिताभ्योग्र्या.कर्मदेवता. । बल्याद्याअंतराप्राप्तदेवता.कर्मदेवता ।

नितिपुराणेषुप्रसिद्धं । एवमन्येष्वपिद्रष्टव्यं । तेयेशतंकर्मदेवानामानंदाःसएकोदेवानामित्यादिवाक्यंव्याचष्टे ॥ ताभ्यइति ॥ तात्त्विकाः तत्त्वाभिमानिनःपुष्करमारभ्यप्रवहांताः । अभ्याइत्यनुवर्तते । देवतांदेवत्वंगताःप्राप्ताः । तेयेशतंदेवानामानंदाः सएकइंद्रस्यानंदः । तेयेशतमिंद्रस्यानंदाः सएकोबृहस्पतेरानंदइत्यत्रेंद्रबृहस्पतिशब्दाभ्यांप्रसिद्धेंद्रबृहस्पत्योर्ग्रहणेइंद्रानंदापेक्षयाबृहस्पत्यानंदस्याधिक्यकथनंप्रमाणबाधितंस्यात् । तस्यततोनीचत्वादतोरूढिपरित्यागेनयोगमंगीकृत्यइंद्रशब्दवाच्यांदेवतां दर्शयनतद्वाक्यंव्याख्याति ॥ तेभ्यइति ॥ इंदुंचंद्रंरारयत्क्षयमनयत् । रीङ्क्षयइतिधातोः । अश्विन्याद्याःदक्षपुत्रीःपरित्यज्यरोहिण्यामेवचंद्रेअत्यासक्तेसतिदक्षेणबहुवारंबोधितोपियदाअश्विन्याद्याःस्त्रीर्नजग्राहचंद्रः । तदातिकुपितोदक्षःकलाक्षयंप्राप्नुहीतिशशापेतिपौराणिकींप्रसिद्धिंहिशब्देनाचष्टे । पुरा मुक्तेःपूर्वं वचनविपरिणामेनाभ्यइत्यस्यानुवृत्तिरत्रोत्तरत्रचद्रष्टव्या । तेयेशतमिंद्रस्यानंदाः सएकोबृहस्पतेरानंदइत्यत्रबृहस्पतिशब्देनदेवगुरुग्रहणेतदानंदस्येंद्रशब्दोक्तदक्षानंदादाधिक्यकथनंप्रमाणविरुद्धंप्रसज्यते । दक्षबृहस्पत्योःसमत्वादतोत्रापिरूढिपरित्यागेनयोगमंगीकृत्यबृहस्पतिशब्दप्रतिपाद्यंदर्शयन्तद्वाक्यंव्याख्याति ॥ तस्मादिति ॥ पुरंदरस्यबृहस्पतिशब्दवाच्यत्वेनिमित्तमुक्तंमहेंद्रत्वादिति । महेतिबृहच्छब्दार्थः । इंद्रेतिपतिशब्दार्थः । अनेन बृहंश्चासौपतिश्चेतिबृहस्पतिरितिनिर्वचनंसूचितंभवति । तद्बृहतोःकरपत्योश्चोरदेवतयोःसमासेसुट्तलोपश्चेतिवचनात्सुडागमेतकारलोपेबृहस्पतिरितियुक्तं । तेयेशतंबृहस्पतेरानंदाः सएकःप्रजापतेरानंदइत्यत्रयदिप्रजापतिर्दक्षस्तर्हितस्येंद्रपदेनोक्तस्य बृह

भाष्यं ॥ ताभ्यश्चतात्विकादेवास्सृष्ट्याद्यौदेवतांगता । तेभ्योदक्षश्चेंद्रनामासहींदुंरारयत्पुरा । तस्माद्बृहस्पतिर्नाममहेंद्रत्वात्पुरंदरः ।

स्पतिशब्दोक्तेंद्रावरस्यतदानंदादधिकानंदवत्त्वंकथ्यमानंविरुद्धंस्यात् । यदिचतुर्मुखस्तर्हितेयेशतंप्रजापतेरानंदाः सएकोब्रह्मण आनंदइत्येतदयुक्तंस्यात् । स्वापेक्षयास्वस्यैवशतगुणानंदत्वोक्तेर्बाधितत्वादतोत्रापिरूढित्यागेनयोगमंगीकृत्यप्रजापतिशब्दप्रति पाद्यंदर्शयंस्तद्वाक्यंव्याचष्टे ॥ **तस्मादिति** ॥ प्रजा प्रजननमितियावत् । तत्पतिस्तन्नियामकइतिपदार्थमभिप्रेत्योक्तंप्रजननेशि तेति।माशिश्नदेवाअपिगुर्ऋतंनः। घ्नन्शिश्नदेवांअभिवर्पसाभूदित्यादिश्रुत्यारुद्रस्यलिंगदेवतात्वप्रसिद्धेः। प्रजननसाधनस्यचरतसो लिंगाश्रितत्वात्रुद्रःप्रजननेशितेतिद्रष्टव्यमितिसंप्रदायः। मुक्तौरुद्रस्याभावाच्छेषोत्ररुद्रशब्देनग्राह्यः । यथोक्तं । उमागिरीशा वितिभारतीरावितिस्मवाग्वेदगताब्रवीति। अहींद्रपत्नीमहिर्पविरिंचपत्नींविरिंचंचविमुक्तिकाले। तएवयत्तत्पदमाप्नुवंतीति । तेयेश तंप्रजापतेरानंदाः सएकोब्रह्मणआनंदइतिवाक्यंव्याचष्टे ॥ **तस्मादिति** ॥ अत्रसरस्वत्यादिस्त्रीणांकेषांचिद्देवानांचानुक्तत्वात् शतशब्दोबहुत्ववचनोनदशदशकपरः । यथोक्तंश्रीमद्भारततात्पर्यनिर्णये । ताभ्यश्चतेशतगुणैर्दशतोवरिष्ठाःपंचोत्तरैरपियथाक्र मशःश्रुतिस्थाः । शब्दोबहुत्ववचनःशतमित्यतश्चश्रुत्यंतरेषुबहुधोक्तिविरुद्धतानेति । तस्माच्छांदोग्यभाष्यानुसारेणैवनिर्णयो द्रष्टव्यः। यथोक्तंसप्तमाध्याये । नामाभिमानिनीचोपाइत्यारभ्य प्राणइत्युच्यतेवायुरित्यंतेन। उषाःस्वाहापर्जन्यमित्राग्निवरुणवि धुप्रवहानिरुद्धाहंकारिकप्राणेंद्रोमारुद्रवाणीप्राणान्देवानुक्त्वा सर्वेत्वेतेदशोत्तराः।पर्जन्यमित्रशिखिनोभूतवायुस्तथैवच। द्विगुणा एवानिरुद्धोनिलात्पंचगुणाधिकः। पादोनोवरुणादग्निरध्यर्धोनःसमोमतः। शिवादाशातथैवास्यामुख्यवायुःशतोत्तरइत्युक्तं । त

भाष्यं ॥ तस्मात्प्रजापतिर्मुक्तोरुद्रःप्रजननेशिता । तस्माद्ब्रह्माशतगुणोमुक्तइत्येषनिर्णय ।

थाचकर्माभिमानिनः पुष्करात्नामाभिमानिनीउषाःदशोत्तरा नाम्नःस्वाहादशोत्तरा तस्याःपर्जन्योद्विगुणोत्तरः ततोमित्रोद्विगुणः मित्रादग्निर्द्विगुणः अग्नेर्वरुणःपादाधिकः वरुणात्सोमःपादपादार्धतोधिकः सोमात्प्रवहोद्विगुणोत्तरः प्रवहादनिरुद्धःपंचगुणः अनिरुद्धात्तैजसाहंकारिकप्राणोदशोत्तरः तस्मात्पुरंदरोदशोत्तरः तस्मादुमादशोत्तरा उमायाःशिवोदशोत्तरः शिवात्सरस्वतीदशोत्तरा तस्याःमुख्यवायुःशतोत्तरः तदात्मकत्वाद्ब्रह्माचेत्युक्तत्वेनसर्वत्रशतप्रयुक्ततारतम्यस्यानादरणीयत्वात् । अतएवशतादिसंख्योक्तेःकागतिरित्याशंक्य संख्यान्यथात्वंयत्रस्यात्तत्रावेशविशेषतः । अवराणांगुणस्यापिपरमीयत्वतस्तथेतिशताधिकसंख्योक्तेर्गतिरपितत्रैवोक्तेत्यवगंतव्यं । अत्रसैषानंदस्येत्यादिनायत्पूर्वपूर्वस्मादुत्तरोत्तरस्यानंदेशताधिकत्वमुक्तं तदिदंज्ञानभक्त्यादिगुणानामप्युपलक्षणमित्याशयेनाह॥ **यथानंदइति** ॥ उक्तेनक्रमेण क्षितिपमनुष्यगंधर्वादिक्रमेण। ननुक्वचित्पूर्वपूर्वस्मादुत्तरोत्तरस्यानंदःसहस्रगुणितइत्युच्यते । क्वचिच्चानंतगुणितइति । अतस्तद्विरोधइत्यतःतदप्यनुमतमित्याह ॥ **अथवेति** ॥ ननुशतगुणेआनंदादौसहस्रगुणितत्वादिकंविरुद्धमतःकथमंगीक्रियतेइत्यतआह ॥ **परिमाणइति** ॥ पूर्वपूर्वेषामानंदापेक्षयाउत्तरोत्तरेषामानंदोऽत्रोक्तरीत्याशतगुणपरिमाणएव । यत्सहस्रगुणितत्वादिकमुक्तंतदुत्तरोत्तरानंदानामतिस्फुटत्वापेक्षयैवेतिनविरोधइतिभावः । आनंदस्फुटतावशादित्यत्रानंदग्रहणमुपलक्षणं । पूर्वपूर्वेषांज्ञानापेक्षयोत्तरोत्तरेषांज्ञानेपरिमाणतःशतगुणितेपि

भाष्यं ॥ यथानंदेतथाज्ञानेविष्णुभक्तौबलादिके । सर्वैर्गुणैश्शतगुणाःक्रमेणोक्तेनतेखिलाः । अथवासहस्रगुणिताअनंतगुणितास्तथा । परिमाणेशतगुणेप्यानंदस्फुटतावशात् ।

स्फुटतावशादनंतगुणितज्ञानवंतइत्युपपद्यतेइत्यादिद्रष्टव्यं । अत्रब्रह्माणमारभ्योमापर्यंतंज्ञानेअनंतांशन्यूनत्वमेव । यथोक्तमनुव्याख्याने। उमायावदनंतांशान्पूर्वदृष्टेभ्यएवतु । विशेषान्वासुदेवस्यपश्चादुक्ताविचक्षतइति । व्याख्यातंचसुधायां । पश्चादुक्ताःवाण्याद्याःउमापर्यंतंपूर्वपूर्वदृष्टेभ्यःब्रह्मादिदृष्टेभ्यः। चतुर्थीषष्ठ्यर्थे। दृष्टानांगुणानांअनंतांशानेववासुदेवस्यविशेषान् विचक्षतइति । तथाचोमामारभ्यब्रह्मपर्यंतंज्ञानेअनंतांशाधिकत्वमेवेतियत्सुधानुव्याख्यानयोरुक्तंतदप्यनेनसमाहितंभवति । उमापर्यंतंयदनंतांशन्यूनत्वमुक्तंतदत्रोक्तरीत्यापूर्वपूर्वज्ञानानामतिस्फुटत्वापेक्षयैव । एतदभिप्रायेणैवानंतगुणितास्तथेत्युक्तमित्यवगंतव्यं । ननुउमायावदनंतांशानितिग्रंथस्वारस्येनोमाज्ञानपर्यंतमनंतांशन्यूनत्वज्ञानेवास्तवमेवविवक्षितं । नस्फुटत्वप्रयुक्तं। सैषानंदस्यमीमांसाभवतीत्यादिनाशतगुणतारतम्यकथनस्यानंदमात्रविषयतायाःस्पष्टमवगमादितिचेन्न । उमायावदित्यस्योक्तरीत्यास्फुटत्वाभिप्रायेणसावकाशत्वात् । यथानंदेतथाज्ञानेविष्णुभक्तौबलादिके । सर्वैर्गुणैश्शतगुणाःक्रमेणोक्तेनतेखिलाइत्यत्रोदाहृतस्पष्टनिरवकाशप्रमाणविरोधप्रसंगेनशतांशन्यूनतायाःआनंदतारतम्योक्तिपरेसैषानंदस्येत्यादावानंदग्रहणस्यज्ञानाद्युपलक्षकत्वात् । नित्यानंदेचभोगेचज्ञानैश्वर्यगुणेषुच । सर्वेशतगुणोद्रिक्ताःपूर्वस्मादुत्तरोत्तरमितिभाष्योदाहृतप्रमाणविरोधाच्चेति । ब्रह्माणीज्ञानस्यब्रह्मज्ञानापेक्षयाअनंतांशन्यूनत्वविषयेज्ञापकांतराणिचास्मदाचार्यकृतसुधाटिप्पण्यांसावकाशतयाव्याख्याता । नीति । तत्रापिब्रह्मज्ञानापेक्षयाशतांशन्यूनत्वमेवावगंतव्यं । ननुस्फुटतायाःपरिमाणविशेषाधीनत्वाच्छतगुणत्वरूपपरिमाणस्यक्षितिपानंदादिकमारभ्यब्रह्मानंदादिपर्यंतमपिसाम्यात्तदधीनास्फुटतापिकथमुत्तरोत्तरानंदादौमहतीस्यादितिचेन्न । ज्ञानेपरो

क्षत्वापरोक्षत्ववत्स्फुटतापिज्ञानानंदादिगतस्वाभाविकविशेषरूपैव नपरिमाणविशेषाधीना। यथोक्तं स्फुटत्वंचपरोक्षत्वादिवज्ज्ञानगतएवकश्चनविशेषोनविषयोपाधिकइति। अन्यथास्फुटतायाःपरिमाणविशेषाधीनत्वेदीपाच्छतगुणाप्यग्निज्वालादीपवत्स्फुटास्यात्। तथासूर्यात्द्विगुणमुद्दीप्तस्याग्नेःसूर्यवत्स्फुटतास्यात्। तथासूर्यमंडलात्द्विगुणस्यापिचंद्रमंडलस्यसूर्यमंडलवत्स्फुटतास्यात्।इष्टापत्तिरितिचेत्तत्राह ॥ **यथेत्यादिना** ॥ बहुलोपि सूर्यात्द्विगुणमुद्दीपितोपि नसूर्यवत् स्फुटीभवेदित्यनुवर्तते। सूर्यचंद्रशब्दौतन्मंडलपरौ। ततःकिमित्यतआह ॥ **उत्तरेषामिति** ॥ एवमित्यादौयोज्यं। एवंतस्मात्स्फुटतायाःज्ञानानंदादिगतस्वाभाविकविशेषत्वेनपरिमाणविशेषाधीनत्वाभावादित्यर्थः। शतगुणपरिमाणेसर्वत्रसमेपीतिशेषः। गुणाःज्ञानानंदाद्याः। ननुसर्वेषांज्ञानादौस्फुटतैकप्रकारैवकिंनस्यात्। सर्वेषामुत्तरोत्तरेषांगुणानामतिस्फुटत्वेऽवरगुणानांचतदभावेनिमित्तविशेषादर्शनादित्यतआह ॥ **प्रतिबिंबाइति** ॥ नरादयः मनुष्योत्तमादयः। आभासकोस्यपवनःपवनस्यरुद्रःशेषात्मकोगरुडएवचशक्रकामौ। वींद्रेशयोस्तदपरेत्वनयोश्चतेषामृष्यादयःक्रमशऊनगुणाःशतांशात्। आभासिकात्वथरमास्यमरुत्स्वरूपाच्छ्रेष्ठाप्यजात्तदनुगीःशिवतोवरिष्ठा। तस्याऽभाविपतिनीचगिरस्तयोस्तुशच्यादिकाःक्रमशएवयथापुमांसः इत्युक्तप्रकारेण पूर्वेनरादयोब्रह्मांतानांप्रतिबिंबाः तदधीनास्तत्सदृशाश्चेत्यर्थः। तेपूर्वेनरादयः अस्पष्टस्वरूपाः अस्पष्टज्ञानानंदादि

भाष्यं ॥ यथादीपाच्छतगुणाप्यग्निज्वालानदीपवत्। स्फुटीभवेद्यथैवाग्निर्बहुलोपिनसूर्यवत्। यथैवसूर्याद्द्विगुणश्चंद्रोनैवस्फुटीभवेत्। उत्तरेषामुत्तरेषांगुणाएवमतिस्फुटाः। प्रतिबिंबायतःपूर्वेब्रह्मांतानांनरादय। अतोस्पष्टस्वरूपास्तेस्फुटरूपास्तथोत्तरा।

स्वरूपाः । स्फुटरूपाः स्फुटज्ञानानंदादिरूपाः । तथाचसर्वेषांज्ञानादौस्फुटतायाएकप्रकारत्वेबिंबप्रतिबिंबभावोनस्यादितिभावः ॥१७–२५॥ **ततश्चायमर्थः** ॥ सर्वेपिज्ञानिनोब्रह्मप्राप्नुवंति । तत्रापिसम्यक्प्राप्तिर्ब्रह्मणएवान्येषांतारतम्येनेति उकारेणसमासतः कथितमेवप्रश्नोत्तरंविस्तरेणमुक्तानंदतारतम्यकथनपूर्वकंवक्तुमाह ॥ **सैषानंदस्येति** ॥ विदुषांनियमेनस्यादेवमोक्षस्तत्रापिमोक्षे सा प्रमाणप्रमिता एषा वक्ष्यमाणा आनंदस्यमीमांसा आनंदवैचित्र्यविषयकोविचारःक्रियमाणोभवति क्रियतइतियावत्। पूर्वं अमुक्तस्यवस्थायांचरमजन्मनि वित्तस्यवित्तेनपूर्णेयंपृथिवीयस्याधीनास्यात्। यःपूर्वंत्रेतायुगेवित्तपरिपूर्णपृथिवीपतिरितियावत्। अतिशयेनसर्वभोगैःसंपन्नइत्यपिग्राह्यं। सर्वैर्मानुषकैर्भोगैःसंपन्नतमइतिबृहदारण्यकोक्तेः । तथाचतदानींतस्यमहानानंदोभवतीतियावत्। यश्चलिंगभंगानंतरंयुवास्यात् युमिश्रणइतिधातोर्युशब्दोयुक्तत्वार्थकः । वागतिगंधनयोरितिधातोर्वातिर्गमनार्थः। योग्यतयाविष्णुनेत्यस्यलाभः । तथाचविष्णुनायुक्तःसन्गच्छतीतियुवा। भगवत्सामीप्यलक्षणमोक्षवान्स्यादित्यर्थः। साधुयुवा निर्दोषोहिसाधुरित्युच्यते । तथाचसाधुभिः दुःखसंभिन्नत्वानित्यत्वादिदोषरहितैरानंदाद्यैर्गुणैर्युक्तः । आध्यायकः अधीतिफलसंपूर्णः आशिष्ठः आसम्यक्शंसुखमस्येत्या(शाः)शीःअतिशयेना(शाः)शीः आशिष्ठः। सम्यक्त्वंचह्रासाभावादिकमेव। यथोक्तमनुव्याख्याने। निर्ह्रासानंदसंप्राप्त्याचाशिष्ठइतिगीयतइति । दृढिष्ठः। अविकारोहिदृढिष्ठोनाम । तथाचस्थितस्यानन्यथाप्राप्तेरतिशयेनदृढोनिर्विकारोदृढिष्ठः । यथोक्तं । स्थितस्यानन्यथाप्राप्तेर्दृढिष्ठश्चोदितइति। बलिष्ठः बलमस्यास्तीतिबली अतिशयेनब

 ॥ सैषानंदस्यमीमांसाभवति। युवास्यात्साधुयुवाध्यायकः। आशिष्ठोदृढिष्ठोबलिष्ठः।

लीबलिष्ठः अतिशयश्चस्वाभावाविकत्वं यथोक्तं बलिष्ठश्चस्वभावेनमुक्तोभवतिकेवलमिति । तस्यमुक्तस्यपूर्वंचक्रवर्तित्वावस्थायां यावानानंदोभूत् अभिव्यक्तस्तावानेवानंदोमानुषआनंदइत्युच्यते। अत्रमानुषशब्दःक्षितिपपरः। तदवरोमनुष्योत्तमोप्यत्रग्राह्यः। अन्येभ्योपिविमुक्तेभ्यआनंदश्चक्रवर्तिनां। मुक्तानांहिशतोद्रिक्तइतिबृहद्भाष्येकथितत्वात् । सचमौक्तःक्षितिपानंदोवस्तुगत्याचतुर्गुणोपासकमुक्तमनुष्योत्तमानंदापेक्षयाशतगुणएवेतिद्रष्टव्यं। शतोद्रिक्तइत्युक्तेः। उत्तरत्रशतगुणानंदादिगणनायाःसम्यक्बुध्यारोहायाह ॥ सएकइति ॥ सःक्षितिपानांयावानानंदोस्ति मनुष्योत्तमानंदाच्छतगुण स्तावान्सर्वोपिमिलित्वा एकः एकत्वेनविवक्षितइतियोज्यमितिसंप्रदायः । तेयेशतंमानुषाआनंदाः मनुष्योत्तमानंदापेक्षयाशतगुणाःयेक्षितिपानंदाःसंति तेषांसर्वेषामप्यानंदानांएकत्वंविवक्षित्वाएतादृशाःयेक्षितिपानांशतसंख्याकानंदाः तत्समानः मनुष्यगंधर्वाणामानंदः । एकवचनंबहुवचनार्थे । आनंदाइत्यर्थः । क्षितिपानंदाच्छतगुणोमानुषगंधर्वाणामानंदइतिभावः । सएकः स क्षितिपानंदाच्छतगुणोयोमनुष्यगंधर्वाणामानंदः ससर्वोपिमिलित्वापुनरेकत्वेनविवक्षितः । उत्तरत्रशतगुणानंदादिगणनानुकूलत्वेनेत्यर्थः । मनुष्यगंधर्वाणाममुक्तत्वप्रतीतिवारणायतान्विशिनष्टि ॥ श्रोत्रियस्यचेति ॥ एकवचनंबहुवचनार्थे । श्रोत्रियाणांसम्यक्श्रुतिफलंप्राप्तानां । अकामहतानां अवाप्तकामत्वेनकामकृतोपद्रवरहितानांमनुष्यगंधर्वाणामित्यन्वयः । प्रकृतमुक्तमनुष्य

उप० ॥ तस्येयंपृथिवीसर्वावित्तस्यपूर्णास्यात् । सएकोमानुषआनंदः । तेयेशतंमानुषाआनंदाः । सएकोमनुष्यगंधर्वाणामानंद । श्रोत्रियस्य चाकामहतस्य ॥ १७ ॥

गंधर्वाणांश्रोत्रियत्वादिविशेषणसमुच्चायकश्चशब्दइतिज्ञातव्यं । यथोक्तंबृहद्भाष्ये । चशब्दस्तुश्रोत्रियत्वादिगुणानांमुक्तौ समुच्चयार्थइति । एवमेवोत्तरत्रापियोजनाद्रष्टव्या ॥ १७ ॥ देवगंधर्वाणां येदेवैःस्वमुखतएवप्रेष्याःनान्यद्वारेण तेदेवगंधर्वास्तेषां । यथोक्तं । देवैःस्वमुखतःप्रेष्याःदेवगंधर्वसंज्ञिताः । तद्वाराप्रेष्यतांयाताःगंधर्वामानुषास्तुत इति ॥ १८ ॥ चिरलोकलोकानां पितरोनेकेसंति तत्रार्यमाद्युत्तमपित्रधिष्ठितोलोकश्चिरलोकइत्युच्यते । चिरलोकेविद्यमानत्वादेवचिरपितरइतितेषां प्रसिद्धिः । तथाचचिरलोकएवलोकोयेषांतेतथोक्तास्तेषां । मुक्तानामपिपितॄणांचिरलोकलोकत्वाभावात्तस्येयंपृथिवीत्यादिवत्पूर्वभावव्यपेक्षयाइदंव्याख्येयं। यद्वा श्रोत्रियत्वादिवदिदमपिपितॄणांमुक्तत्वज्ञापकमेव । तथाचनाशशून्यतयाचिरलोकोवैकुंठादिः सएवलोकोयेषांतेतथोक्तास्तेषामितिवा । लुकृप्रकाशइतिधातोश्चिरलोकेवैकुंठादौ लोकानां स्वरूपाविर्भावेणप्रकाशमानानामितिवाव्याख्येयमिति । प्रयोगेसतिनिमित्तानुसरणं नतुनिमित्तमस्तीतिप्रयोगइतिनकश्चित्क्षुद्रोपद्रवइति ॥ १९ ॥ आजानजानां देवकुलेउत्पन्नाःनामविशेषेणानाख्याताआजानजास्तेषां ॥ २० ॥ कर्मदेवताशब्दंनिर्वक्ति ॥ येकर्मणेति ॥ ये बल्याद्याः यज्ञेवामनायमहीदानादिरूपकर्मणा देवान् भावप्रधानोनिर्देशः । देवत्वानि अपियंतिप्राप्नुवंतितेकर्मदेवाइत्यु

उप० ॥ तेयेशतंमनुष्यगंधर्वाणामानंदाः । सएकोदेवगंधर्वाणामानंदः । श्रोत्रियस्यचाकामहतस्य ॥ १८ ॥ तेयेशतंदेवगंधर्वाणामानंदा । सएक पितॄणांचिरलोकलोकानामानंद । श्रोत्रियस्यचाकामहतस्य ॥ १९ ॥ तेयेशतंपितॄणांचिरलोकलोकानामानंदा । सएकआजानजानांदेवानामानंदः । श्रोत्रियस्यचाकामहतस्य ॥२०॥ तेयेशतमाजानजानांदेवानामानंदा । सएक.कर्मदेवानांदेवानामानंद । येकर्मणादेवानपियंति ।

च्यंते । येकर्मणादेवत्वमभिसंपद्यंतइतिबृहदारण्यकोक्तेः । पूर्वभावव्यपेक्षयेदं । तथाचयेकर्मणादेवानपियंतिबल्याद्याःतेषांकर्म देवानां देवानां दिवुक्रीडाविजिगीषाद्युतीत्यादिधातोः मोक्षेद्योतमानानांबल्यादीनामानंदइत्यर्थः ॥ २१ ॥ देवानां सृष्ट्यादावे वदेवत्वंप्राप्तानांतत्वाभिमानिनांपुष्करमारभ्यप्रवहांतानांदेवानामित्यर्थः । तदानंदेष्वपिअवांतरतारतम्यंप्रमाणांतरादवसेयं ॥ २२ ॥ इंद्रस्येति ॥ इंदुंचंद्रंमुक्तेःपूर्वंरारयत् रीङ्क्षयइतिधातोः क्षयमनयदितिहेतोरिंद्रोदक्षः तस्येत्यर्थः ॥ २३ ॥ बृहस्पतेः बृहंश्चासौपतिश्चेतिव्युत्पत्त्यामहेंद्रत्वात्पुरंदरोबृहस्पतिशब्देनोच्यते तस्येत्यर्थः ॥ २४ ॥ प्रजापतेः प्रजाप्रजननं तदीशितृत्वा त्प्रजापतीरुद्रस्तस्य । प्रजननसाधनस्यरेतसोलिंगाश्रितत्वाद्रुद्रस्यचलिंगदेवतात्वेनप्रसिद्धेःरुद्रःप्रजननेशिताभवतीतिप्रजापतिश ब्देनोच्यतेइतिभावः । अत्ररुद्रपदेनशेषोग्राह्यः । भुक्तप्रसंगात् । यथाहिलोकेकस्यचिच्चतुर्थाश्रमरूपावस्थांतरापत्तावपितदभि ज्ञास्तंपूर्वनाम्नैवव्यवहरंतीतिप्रसिद्धमित्यवगंतव्यं ॥ २५ ॥ ब्रह्मणश्चतुर्मुखस्य अत्रानंदग्रहणंज्ञानादिगुणानामप्युपलक्षणं । त थाचपूर्वपूर्वज्ञानाद्यपेक्षयोत्तरोत्तरस्यज्ञानादिकमप्यानंदवच्छतगुणाधिकमेवेत्यवगंतव्यं ॥ २६ ॥ (अथभाष्यार्थः) ॥ एवंवि

उप० ॥ श्रोत्रियस्यचाकामहतस्य ॥ २१ ॥ तेयेशतंकर्मदेवानांदेवानामानंदाः । सएकोदेवानामानंदः । श्रोत्रियस्यचाकामहतस्य ॥ २२ ॥ तेयेशतंदेवानामानंदाः । सएकइंद्रस्यानंद । श्रोत्रियस्यचाकामहतस्य ॥ २३ ॥ तेयेशतमिंद्रस्यानंदाः । सएकोबृहस्पतेरानंद । श्रोत्रियस्य चाकामहतस्य ॥ २४ ॥ तेयेशतंबृहस्पतेरानंदाः । सएकःप्रजापतेरानंदः । श्रोत्रियस्यचाकामहतस्य ॥ २५ ॥ तेयेशतंप्रजापतेरानंदाः । सएको ब्रह्मणआनंदः । श्रोत्रियस्यचाकामहतस्य ॥ २६ ॥

ष्णोर्विदुषांनरादिब्रह्मांतानांनियमेनमोक्षदातृत्वरूपंमोक्षेचतरतमभावापन्नस्वरूपानंदाविर्भावदातृत्वरूपंमहिमानंचोक्त्वाइदानीं उत्कृष्टापकृष्टसर्वजीवनियामकतयावस्थितरूपाभेदरूपंमहिमांतरमुच्यते । सयश्चायंपुरुषइत्यादिना । तत्रपूर्वेणसंगतिंसूचयन्पुरुषशब्दोक्तमनुष्यादित्यमात्रस्थितयोरेवरूपयोः अभेदउच्यतइतिप्रतीतिनिरासायादित्यपुरुषशब्दौउत्कृष्टापकृष्टसर्वजीवोपलक्षकावित्यभिप्रेत्यप्रमाणेनैवव्याचष्टे ॥ **यत्प्रसादादित्यादिना** ॥ ब्रह्मादीनामंततः लिंगदेहनाशानंतरं । संसम्यक् स्वयोग्यतानुसारेण । स्वरूपाप्तिः स्वरूपानंदावाप्तिः। यत्प्रसादाद्भवतिसविष्णुरितियोज्यं। समंततः सर्वकल्पेष्ववस्थितानामितिवा । सएकइत्यत्रत्यतच्छब्दानुवादेनविष्णुरितिव्याख्यातं। सर्वजीवेष्वित्यस्यविवरणंनृषुदेवेषुचेति। तथाचादित्यपुरुषशब्दावुत्कृष्टापकृष्टसर्वजीवोपलक्षकावित्युक्तंभवतीतिज्ञातव्यं । भेदाभेदव्यावृत्त्यर्थंएकएवेत्युक्तं । करचरणादिसमग्रांगसाकल्येनयुगपदनेकस्थानस्थितस्यविष्णोरेकत्वमन्यत्रादृष्टंकथंघटतइत्यतआह ॥ **महायोगीति** ॥ युज्यतेनेनयोगोसावुपायःशक्तिरेवचेतिशब्दनिर्णयवचनात्। अघटितघटकतयामहान्योगःशक्तिःतद्वानित्यर्थः । उत्कृष्टापकृष्टजीवस्थितयोर्विष्णुरूपयोर्यमधर्मरूपयोःविदुरयुधिष्ठिरयोरिव विशेषोस्तिकिंनेत्याह ॥ **अखिलैर्गुणैर्निर्विशेषइति** ॥ सर्वजीवावस्थितत्वोक्त्यालब्धार्थप्रदर्शनंसर्वोत्तमइति । संपूर्णःअखिलैर्गुणैरितिवर्तते । सर्वरूपेष्वभेदादिरूपभगवन्माहात्म्यवेत्तुःमुक्तानंदादितारतम्यंवेत्तुश्चफलमुच्यते सयएवंविदित्यादिना । तद्व्याचष्टे

भाष्यं ॥ यत्प्रसादात्स्वरूपाप्तिर्ब्रह्मादीनांसमंततः । सविष्णुस्सर्वजीवेषुनृषुदेवेषुचस्थितः । एकएवमहायोगीनिर्विशेषोखिलैर्गुणैः । सर्वोत्तमस्सपूर्णश्च ।

॥ तमेवंवेदेति ॥ सर्वरूपाभिन्नत्वसृष्टिकर्तृत्वसृष्टपदार्थप्रवेष्टृत्वादिरूपोक्तमाहात्म्योपेतत्वेनतंविष्णुंवेदेत्यर्थः । जीवान्मनुष्योत्तमादिब्रह्मांतान्तारतम्यस्थान् भगवत्प्रसादाविर्भूततरतमभावोपेतानंदादिमतइतियावत् । योवेद सःअस्माल्लोकाच्चरमत्वेनप्रसिद्धाच्छरीरात्प्रेत्येतिशेषः। पंचरूपिणंविष्णुंगच्छेदित्यर्थः। पंचचतानिरूपाणिचपंचरूपाणि तान्यस्यसंतीतिपंचरूपीतमितिकर्मधारयादिनिः।उपसंक्रामतीत्यस्यार्थोगच्छेदिति। अत्रान्नमयनामानिरुद्धोभूम्यपृस्थितः। प्राणमयनामाप्रद्युम्नोग्न्यादिस्थितः। मनोमयनामासंकर्षणोमनआदितत्वस्थितः । विज्ञानमयनामावासुदेवोमहत्तत्वस्थितः। आनंदमयनामानारायणोऽव्यक्ततत्वगतइतिविशेषोद्रष्टव्यः। यथोक्तंद्वितीयस्कंधतात्पर्ये। भूम्यब्गमन्ननामानंप्राणमग्न्यादिसंस्थितं। मानसंमनआदिस्थंविज्ञानंमहतिस्थितं । आनंदमव्यक्तगतंक्रमशोयांतिदेवताइति। अनेन यएवंवित्सोस्माल्लोकात्प्रेत्यैतच्छरीररूपमन्नमयमात्मानंशरीररूपंकोशमुपसंक्रामति । अतिसंक्रामति अतिक्रम्य परित्यज्येतियावत् । गच्छतीत्येतदपव्याख्यानमित्युक्तंभवति । श्रुतोपशब्दत्यागस्याश्रुतातिशब्दकल्पनस्यचापत्तेः । नचाव्ययानामनेकार्थत्वादुपशब्दएवातिक्रमार्थकइतिवाच्यं । अव्ययानामनेकार्थत्वेपि अंतरित्यस्यकदापिवहिरित्यर्थकत्वाभावात् । अन्नमयशब्दवाच्यशरीररूपकोशपरित्यागस्यअस्माल्लोकात्प्रेत्येतिपूर्ववाक्येनैवोक्तत्वेनपुनरुक्तिश्चस्यादितिद्रष्टव्यं । यथोक्तमनुव्याख्याने । उपसंक्रमणंचैवद्वितीयोद्देशितंप्रति । अतिक्रमंवदंतंतमुपशब्दोनिवारयेत् । अश्रुतस्यातिशब्दस्यस्थानंदद्यात्कथंपुनः । श्रुताश्रुतपरित्यागकल्पनेविगतह्रियां । मृतावेवपरित्यागःकृतोह्यन्नमयस्यचेति ॥ २७ ॥

भाष्यं ॥ तमेवंवेदयःपुमान् । जीवांश्चतारतम्यस्थान्सगच्छेत्पंचरूपिणं ।

सयएवंविद्वानेतेआत्मानᳬंस्पृणुतेइत्येतद्व्याचष्टे ॥ **नपुण्यपापेचेति** ॥ तस्यएवंवेत्तुः। स्वफलप्रदेइतिशेषः । ननुप्रारब्धपुण्यपापयोःसद्भावात्कथमेतदित्यतउक्तं ॥ **अनिष्टेइति** ॥ यदनभीष्टमप्रारब्धंकाम्यंपुण्यंतद्बंधकत्वेनानिष्टं । पापंत्वनिष्टंभवत्येवेतिप्रसिद्धत्वात्अप्रारब्धंकाम्यंपुण्यंपापंचेत्येतेपुण्यपापेनस्वफलप्रदेभवतइत्यर्थः । यथोक्तंसूत्रकृता । अतोन्यदपीत्येकेषामुभयोरिति । उक्तंचभाष्ये । अनभीष्टमनारब्धंपुण्यमप्यस्यनश्यति । किमुपापंपरब्रह्मज्ञानिनोनात्रसंशयइति । कुतोनतस्यानिष्टेपुण्यपापेस्वफलप्रदेइत्यतआह ॥ **प्रियाप्रियेष्विति** ॥ प्रियेष्वप्रियेषुचनृषु । पुत्रादयस्तदितरेसुहृदश्चप्रियशब्देनात्रविवक्षिताः । तेअनिष्टपुण्यपापेपुत्रादयःप्रियाश्चापरोक्षज्ञानजन्मकालीनाएवेतिसंप्रदायविदः । आस्तृणोति विस्तारयति । जहातीतियावत् । धातूनामनेकार्थत्वात् । यतस्ततोनतस्यानिष्टेपुण्यपापेस्वफलप्रदेइतिसंबंधः । यथोक्तंभाष्ये तस्यपुत्रादायमुपयंतिसुहृदःसाधुकृत्यां द्विषंतःपापकृत्यामिति । तस्यापरोक्षज्ञानिनःतज्जन्मकालीनाःयेपुत्राःसुहृदःतदन्येप्रियाश्चतेसर्वेसाधुकृत्यांदायंअप्रारब्धानिष्टकाम्यपुण्याख्यंधनंउपयंतिप्राप्नुवंति । द्विषंतस्तुपापकृत्यांदायं अप्रारब्धपापाख्यंदायमुपयंतीतिश्रुत्यर्थोद्रष्टव्यः । यतोवाचोनिवर्ततेइत्यादिकंव्याख्याति ॥ **अगोचरमिति** ॥ समासांतोविधिरनित्यइतिवचनात्वाङ्मनसोरितिसाधु । साकल्येनेतिशेषः । कुतइत्यतस्तत्रश्रुत्यभिप्रेतंहेतुमाह ॥ **आनंत्यादिति** ॥ पुरुषोत्तमंज्ञात्वेत्यनेनानंदंब्रह्मणइत्येतदानंदरूपंपरंब्रह्मविद्वानितिव्याख्ये

---

भाष्यं ॥ विष्णुनपुण्यपापेचतस्यानिष्टेकदाचन । प्रियाप्रियेपुतज्ज्ञानीह्यास्तृणोतियतोनृपु । अगोचरंवाङ्मनसोरानंत्यात्पुरुषोत्तमं ।

यमितिसूचयति।ज्ञात्वेत्यनंतरंअवस्थितस्येतिशेषः। तेनज्ञानरूपक्रियायांअवस्थानरूपक्रियायांचपुरुषस्यैवकर्तृत्वेनसमानकर्तृत्वप्राप्त्याभुक्त्वाव्रजतीतिवज्ज्ञात्वेतिक्त्वाप्रत्ययोपपत्तिः । समानकर्तृकयोःपूर्वकालेक्त्वेतिस्मरणात् । तथाचज्ञानरूपक्रियायांपुरुषस्य कर्तृत्वान्नभविष्यतीत्युक्तभवनरूपक्रियायांचभीरित्युक्तभयस्यकर्तृत्वेनसमानकर्तृत्वाभावात्कथंक्त्वाप्रत्ययप्रयोगइतिशंकानवकाशइतिज्ञातव्यं ॥ भीर्नैवेति ॥ किमहंसाधुनाकरवमित्यादिरूपपश्चात्तापजनिताभीर्भीतिःसंसारिणांयाप्रसिद्धा सामुक्तस्यकुतश्च नकुतोपिनैवभविष्यतीत्यर्थः ॥ २८ ॥ ततश्चायमर्थः ॥ एवंविष्णोर्विदुषांनियमेनमोक्षदातृत्वरूपंमोक्षेचतरतमभावापन्नस्वरूपानंदाविर्भावदातृत्वरूपमहिमानंचोक्त्वेदानींउत्कृष्टापकृष्टसर्वजीवनियामकतयावस्थितरूपाभेदरूपंमहिमांतरमाह ॥ सइति ॥ चशब्दौपरस्परसमुच्चयार्थौ । सप्रसिद्धोयोयं पुरुषे तदुपलक्षितापकृष्टजीवेषुनियामकतयातिष्ठति । यश्चासावादित्ये तदुपलक्षितोत्कृष्टजीवेषुदेवेषुनियामकतयातिष्ठति । स ब्रह्मादीनांस्वरूपानंदाविर्भावासिदाताविष्णुरेकएव । नतयोःपरस्परंभेदोमंतव्यइत्यर्थः । सर्वरूपेष्वभेदादिरूपभगवन्माहात्म्यवेत्तुर्मुक्तानंदतारतम्यवेत्तुश्चफलमाह ॥ सयइति ॥ यःएवंउक्तप्रकारेणसर्वरूपेष्वभिन्नत्वादिरूपभगवन्माहात्म्यस्यवित्वेत्ता तथाएवंनरादिब्रह्मांतानांभगवत्प्रसादादाविर्भूततरतमभावोपेतानंदस्यचवित्वेत्ता एवंभगवन्माहात्म्यज्ञानपूर्वकस्नेहरूपभक्त्युपासनादिजनितापरोक्षज्ञानीतियावत् । सःभोगेनप्रारब्धंकर्मक्षपयित्वाऽनंतरंअस्मात्

भाष्यं ॥ ज्ञात्वामुक्तस्यभीर्नैवकुतश्चनभविष्यतीत्यादियजुस्संहितायां ।
उप ॥ सयश्चायंपुरुषे । यश्चासावादित्ये । सएकः । सयएवंवित् । अस्माल्लोकात्प्रेत्य ।

चरमत्वेनप्रसिद्धाल्लोकाच्छरीरात्प्रेत्य हृदयाग्रप्रज्वलनप्रकाशितनाडीद्वारादेहान्निष्क्रम्यअर्चिरादिद्वारायथायोग्यंकार्यमकार्यंच ब्रह्मप्राप्यावस्थितःसन्कार्यात्ययेतदध्यक्षेणब्रह्मणासह एतमन्नमयंतन्नामकंभूम्यब्गंआत्मानंअनिरुद्धंउपतत्समीपमितियावत्। सक्रामतिगच्छतीत्यर्थः । प्राणमयं अग्न्यादिषुस्थितंप्रद्युम्नं । मनोमयं मनस्तत्वादिसंस्थंसंकर्षणं। विज्ञानमयं महति स्थितंवासुदेवं। आनंदमयं अव्यक्ततत्वगतंनारायणं । एवंपंचरूपिणंभगवंतंप्राप्य संसारभयरहितःसन्तिष्ठतीतिशेषः ॥ २७ ॥ अत्रार्थेसंमतितयाश्लोकमुदाहरति ॥ तदपीति ॥ तत्रापिपंचरूपिणंभगवंतंप्राप्तस्यभयराहित्ये एषःवक्ष्यमाणः श्लोकोभवतीत्यर्थः । तमेवश्लोकंपठति ॥ यतइति ॥ यतोयस्मात्मनसासहवाचः अप्राप्यनिवर्तंते । आनंत्यादितिशेषः। एतादृशंब्रह्मणआनंदं आनंदरूपिणं आनंदमयंनारायणाख्यंपरंब्रह्मेतियावत्। इदमुपलक्षणं। अन्नमयादिशब्दवाच्यानिरुद्धादिरूपचतुष्टयमपिग्राह्यं। विद्वान् तद्विषयकापरोक्षज्ञानद्वारातंप्राप्तइतियावत्। कुतश्चनकुतोपि। नबिभेति संसारभयवान्नभवतीत्यर्थः। इति श्लोकोभवतीतिसंबंधः । श्लोकोक्तंभयाभयंविवृणोति ॥ एतꣳहवावेति ॥ अहं किंकिमर्थं साधुकर्मनाकरवं नाकार्षं । किमर्थंपापमकरवं येनैतादृशंपापफलंभुंजेइत्येवंरूपंपश्चात्तापजनितंभयंएतंमुक्तंनतपति

उप ॥ एतमन्नमयमात्मानमुपसंक्रामति । एतंप्राणमयमात्मानमुपसंक्रामति । एतंमनोमयमात्मानमुपसक्रामति । एतंविज्ञानमयमात्मानमुपसंक्रामति । एतमानंदमयमात्मानमुपसंक्रामति ॥ २७ ॥ तदप्येषश्लोकोभवति । यतोवाचोनिवर्तंते । अप्राप्यमनसासह । आनंदंब्रह्मणोविद्वान् । नबिभेतिकुतश्चनेति । एतꣳहवावनतपति । किमहꣳसाधुनाकरवं । किमहंपापमकरवमिति ।

नसंतापयति इत्येतत्‌हवाव अतिप्रसिद्धमित्यर्थः । संसारेप्रसिद्धंएतादृशंभयंमुक्तस्यनास्तीतिभावः । ननुज्ञानिनःकथंभगवत्प्राप्तिः प्रारब्धकर्मणांभोगेनक्षयेपिपूर्वार्जितानामप्रारब्धानांपुण्यपापरूपाणांअनंतकर्माणांभावात् । नचतेषामपिभोगेनक्षयइतिवाच्यं । आनंत्यादेव । यथोक्तं । नह्यानंत्यात्कर्मणांभोगेननाशइति। तत्राह ॥ सयएवंविद्वानिति ॥ सःयःप्रसिद्धः एवमुक्तमाहात्म्योपेतत्वेन आत्मानंपरमात्मानंविद्वान्तदपरोक्षज्ञानीतियावत् । एतेअनिष्टंअप्रारब्धंयत्काम्यपुण्यं तथाऽप्रारब्धंपापंचेत्येवमेते पुण्यपापेस्पृणुते स्तृणुते । प्रियेष्वप्रियेषुचास्तृणोति विस्तारयति । धातूनामनेकार्थत्वात् । जहातीतियावत् । तथाचतदीया प्रारब्धानभीष्टपुण्यपापभागिनःप्रियाप्रियाश्चभवंतीत्यर्थः । सुहृदःसाधुकृत्यांद्विषंतःपापकृत्यामितिश्रुतेः । तथाचयुक्ताज्ञानिनोभगवत्प्राप्तिरितिभावः । उक्तप्रकारेणभगवज्ज्ञानीअनिष्टेपुण्यपापेप्रियाप्रियेषुजहातीत्युक्तं तन्नोपचरितमितिभावेनतथावेत्तुरपितदेवफलंभवतीत्याह ॥उभेइति॥ इदंवाक्यमा(वर्त्य)वृत्त्यायोज्यं । तथाहि । यएवमुक्तप्रकारेणआत्मानंभगवंतंवेदअपरोक्षतो जानाति सएषउभेअनिष्टेपुण्यपापेप्रियाप्रियेषुस्पृणुतेस्तृणुतेइत्येवंयोवेद सएषोप्यधिकारीअपरोक्षज्ञानानंतरंउभेअनिष्टेपुण्यपापेएवप्रियाप्रियेषुस्पृणुतेस्तृणुते नप्रारब्धमपीत्यर्थः । यएवं सयएवंविद्वानेतेआत्मानꣳस्पृणुतेइत्युक्तप्रकारेणवेद सएषोप्युभेस्पृणुतइति योजनायां आत्मानमित्येतदुर्वरितंभवतीतिज्ञातव्यं । तदर्थमात्मशब्दोनभगवत्परोपितुज्ञानिपरइत्यंगीकृत्ययएवं सयएवंविद्वानि

उप० ॥ सयएवंविद्वानेतेआत्मानꣳस्पृणुते । उभेह्येवैषतेआत्मानꣳस्पृणुते । यएवंवेद । इत्युपनिषत् ॥ ओं । सहनाववतु । सहनौभुनक्तु । सहवीर्यंकरवावहै । तेजस्विनावधीतमस्तुमाविद्विषावहै ॥ ओंशांतिश्शांतिश्शांतिः ॥ २८ ॥ इतिद्वितीयाब्रह्मवल्लीसंपूर्णा ॥ २ ॥

त्युक्तरीत्याप्रियाप्रियेषुपुण्यपापहानकर्तृत्वेनात्मानंज्ञानिनंवेद सएषोप्युभेस्पृणुतइतियोजनायांतुनावृत्तिर्द्रष्टव्या । एवंवरुणंप्रत्युपदिश्योपसंहरतिब्रह्मा इत्युपनिषदिति । यदेवविद्ययाकरोतिश्रद्धयोपनिषदेत्यत्रोपनिषीदतीत्युपनिषद्योग्येतिटीकाकारैरुपनिषच्छब्दोयोग्यार्थतयाव्याख्यातः । तस्योपनिषत्सत्यस्यसत्यमितीत्यत्रोपनिषत्रहस्यंनामेतिरहस्यार्थतयाचव्याख्यातः । तथाच इतिपूर्वोक्तप्रकारेणउपनिषत् त्वद्योग्या रहस्यभूताच ब्रह्मविद्या त्वांप्रतिमयोपदिष्टेतिशेषः ॥२८॥ एवंसमग्रब्रह्मवल्लीं स्वयोग्यंब्रह्मविदित्यादिप्रमाणेनैवसम्यग्व्याख्याय सोश्नुतइत्यादेःपरकृतापव्याख्यां प्रत्याख्याति ॥नचेति॥ ननूपनिषद्व्याख्यानमुपक्रम्यअपव्याख्याननिराकरणेअसंगतिरितिचेन्न । स्वव्याख्यानदार्ढ्यार्थत्वात् यावदापातसुंदरंअपव्याख्यानंशिष्याःपश्येयुस्तावत्प्रमाणेनकृतमपिसम्यग्व्याख्यानंनतेषांहृदिदृढनिरूढंभविष्यतीतितत्प्रत्याख्यानमावश्यकमेव । तत्रसब्रह्मवित्सहयुगपत्एककालं सर्वान्कामानश्नुते । ननुकथंतस्यसर्वकामभोक्तृत्वमित्याशंक्योक्तं । ब्रह्मणेति । ब्रह्मरूपेणेत्यर्थः । तथाचमुक्तस्यब्रह्माभिन्नत्वाद्ब्रह्मणश्च भोक्तृसर्वजीवात्मकत्वात्तद्घटतइत्येवंसोश्नुतेसर्वान्कामान्सहब्रह्मणेति वाक्यस्यार्थोनकल्पनीयइत्यर्थः । कुतोनकल्पनीयइत्यत आह ॥ **अप्रामाणिकत्वादिति** ॥ प्रमाणशून्यत्वात्स्वयोग्यंब्रह्मविदित्यादिप्रमाणविरुद्धत्वाच्चेत्यर्थः ॥ **अनाश्वासाच्चेति**॥ अप्रामाणिकत्वादेवत्वदुक्तेर्थेविश्वासाभावाच्चेत्यर्थः । ननुभवद्भिरपिओषधीभ्योन्नमित्यत्रान्नशब्दःप्रसिद्धान्नपरइत्यंगीकृत्य सवाएषपुरुषोन्नरसमयइत्यत्रान्नशब्दोअत्तृत्वाद्यर्थइत्येवंअत्तृत्वा त्सर्वलोकानामन्नमित्युच्यतेहरिः । उपजीव्यश्चभूतानामित्या

भाष्यं ॥ नचसहब्रह्मणेत्यादेरन्योर्थ कल्प्य । अप्रामाणिकत्वादनाश्वासाच्च ।

दिव्याख्यातं । तदप्ययुक्तं । एकेनशब्देनद्विरुक्तेनभेदश्रुतिंविनावस्तुद्वयोक्तिग्रहणायोगादित्याशंक्यनिषेधति ॥ नचेति ॥ उभयार्थत्वे प्रसिद्धान्नात्तृत्वादिरूपार्थद्वयवत्त्वेअन्नशब्दस्यांगीकृतेसतीतिशेषः । विरोधः पूर्ववाक्येअन्नशब्दस्यप्रसिद्धान्नपरत्वे प्रकृतत्वविरोधइत्यर्थः । कुतोनविरोधइत्यतोज्ञापकसद्भावादित्याह ॥ **विशेषितत्वादिति** ॥ ओषधीभ्योन्नमित्यत्रान्नशब्दः प्रसिद्धान्नपरएव सवाएषइत्यत्रचान्नशब्दोरसशब्देनविशेषितत्वादत्तृत्वाद्यर्थइत्येवमर्थद्वयांगीकारोपपत्तेर्नविरोधइत्यर्थः । तत्रदृष्टांतमाह ॥ **अन्नस्यान्नमित्यादिना** ॥ अन्नस्यान्नत्वप्रदंभगवद्रूपमित्यर्थः । प्राणोमुख्यप्राणोमध्यमोऽवांतरेश्वरः । अवांतरेश्वरत्वेनतस्येश्वरवचोभवेत् । अतोमध्यमतामाहुरितिवचनात् । प्राणोहरिः स्थूणां स्तंभवदाश्रयः । स्थूणातुभगवान्हरिरितिवचनात् । यथान्नस्यान्नमितिवाक्येअन्नशब्दद्वयंभिन्नार्थकमेव । एकस्यषष्ठ्यानिर्देशात् अपरस्यप्रथमयानिर्देशात् । यथावायोर्यंमध्यमःप्राणः प्राणःस्थूणेत्यत्रएकप्रकरणेश्रुतस्यापिप्राणशब्दद्वयस्यमुख्यप्राणभगवदाख्यार्थद्वयमंगीक्रियते । मध्यमत्वस्थूणात्वरूपविशेषणबलात् । एवंप्रकृतेपिओषधीभ्योन्नमन्नात्पुरुषइत्यत्रौषधिजातत्वेनदेहोपादानत्वेनचविशेषितत्वात्तत्रान्नशब्दःप्रसिद्धान्नार्थकएव । सवाएषइत्यत्रतुरसशब्देनविशेषितत्वादन्नशब्दोत्तृत्वाद्यर्थकएवेत्यर्थद्वयांगीकारोयुक्तइत्यर्थः । एषभगवान् अनिरुद्धःस्वयंहरिरित्यादिनाअन्नमयादयःपंचापिब्रह्मैवेतिप्रमाणेनस्वयंव्याख्यातं । मायावादिनस्त्वाहुरन्नमायादयः पंचापि

भाष्यं ॥ नचौषधीभ्योन्नं अन्नरसमयइत्यत्रोभयार्थत्वेनविरोधः । अन्नस्यान्नं मध्यमःप्राणः प्राणस्स्थूणेत्यादिवद्विशेषितत्वादुपपत्तेः ।

कोशाएवेतितद्दूषयति ॥ **नचेति** ॥ ननुतेषांब्रह्मत्वेपिकिंमानमितिचेत् । उदाहृतंप्रमाणवाक्यंतावदेकं । आनंदमयोभ्यासादितिसूत्रोक्तब्रह्मशब्दाभ्यासरूपंप्रमाणांतरमाह ॥ **येन्नंब्रह्मेत्यादिना** ॥ अन्नमयादीनांब्रह्मत्वेभृगुवल्लीसमाख्याकथनं अधीहीत्यादि । ब्रह्मशब्देनोक्तत्वात् ब्रह्मशब्देनान्नमयादीनांविशेषितत्वादित्यर्थः । नन्वन्नंप्राणमित्यादिवाक्येब्रह्मशब्दाश्रवणात्कथंब्रह्मशब्देनोक्तत्वादित्युच्यते । अतोन्नादीनामब्रह्मत्वमेवेत्याशंकापरिहारायाधीहिभगवोब्रह्मेतिवाक्यमुदाहृतं । अधीहिभगवोब्रह्मेतीतिभृगुणाब्रह्मोपदेशप्रार्थनेकृतेसतिवरुणेनतंप्रत्युपदिष्टत्वान्यथानुपपत्त्यान्नादीनांब्रह्मत्वावगमात् । यथोक्तं । अधीहिभगवोब्रह्मेत्युक्तोन्नप्राणपूर्वकं । आहब्रह्मकथंतन्नेति । अन्नंब्रह्मेतिव्यजानादित्यादौतुस्पष्टएवब्रह्मशब्दः । अतएवेत्यादिनेत्युक्तं । नचब्रह्मोपदेशप्रार्थनेकृतेपिवरुणोन्यदुवाचेतियुक्तं । मायावित्वप्राप्तेः । यथोक्तं । तद्यत्किंचित्कथंब्रूयादुपसन्नायदिक्पतिः । नवदेद्ब्रह्मचकथंमायावीनहिवारिराडिति । ननुब्रह्मवल्ल्युक्तानांअन्नमयादीनांब्रह्मत्वेपि भृगुवल्ल्युक्तानांकुतोब्रह्मत्वमितिचेन्न ब्रह्मवल्ल्युक्तार्थेसमाख्यात्वेनैवभृगुवल्ल्याःप्रवृत्तत्वात् । यथोक्तं । भृगोश्चैतद्वदिष्यतीति । ननुस्थानद्वयेपिनैकंवस्तूच्यते । ब्रह्मवल्ल्युक्ताः अन्नमयादयः भृगुवल्ल्युक्ताश्चान्नादयइतिसंज्ञाभेदादितिचेन्न । भृगुवल्ल्यामपिएतमन्नमयमात्मानमुपसंक्रम्येत्यादिनाप्राप्यस्थानेमयटामुक्तत्वेनशब्दांतरन्यायनेभृगुवल्ल्युक्तान्नादिशब्दानामपिअन्नमयादिपरत्वात् । यथोक्तं प्राप्यत्वेनमयट्प्रोक्ते

भाष्यं ॥ नचान्नमयादीनामब्रह्मत्वेकिंचिन्मानं । येन्नंब्रह्मोपासते । येप्राणंब्रह्मोपासते । आनंदंब्रह्मणोविद्वान् । विज्ञानंब्रह्मचेद्वेद । अस्तिब्रह्मेतिचेद्वेद । अधीहिभगवोब्रह्मेति । तस्माएतत्प्रोवाच । अन्नंप्राणंचक्षुश्श्रोत्रंमनोवाचमित्यादिनाब्रह्मशब्देनोक्तत्वाच्च ।

र्नतत्राप्यन्यदुच्यतइति । ननुतथापिनस्थानद्वयोक्तमेकंवस्तुभवितुमर्हति । ब्रह्मवल्ल्युक्तानांअन्नमयादीनांपंचत्वात् भृगुवल्ल्युक्तानांअन्नादीनांषट्त्वादितिसंख्याभेदादितिचेन्न । वाधूलशाखायामष्टमरूपस्यापिब्रह्मणउक्तत्वेनतदनुसारादत्रापिब्रह्मवल्ल्यांचक्षुःश्रोत्रवाचामपिग्राह्यत्वात् । भृगुवल्ल्यामपिविज्ञानानंदमययोर्ग्राह्यत्वेनस्थानद्वयेपिरूपाष्टकस्यवाच्यत्वेनसंख्यासाम्यस्यैवप्राप्त्यातद्भेदाभावात् । यथोक्तं । तच्चवाधूलशाखायामष्टरूपमुदाहृतं । विज्ञानानंदसहितंपृथक्सृष्ट्यादिलक्षणैः । आवापोद्वापतःशाखायतआहुःपरंपदमिति । अन्नमयप्राणमयमनोमयविज्ञानमयानंदमयामेशुद्ध्यंतामितिश्रुत्यंतरोक्तानांतुशुद्धिप्रार्थनलिंगादब्रह्मत्वेपिनविरोधइतिज्ञातव्यं । अतःस्थानद्वयेप्येकस्यैववस्तुनउच्यमानत्वेननयुक्तं ब्रह्मवल्ल्युक्तान्नमयादीनांब्रह्मत्वेभृगुवल्लीसमाख्याकथनमितिभावः । एवमन्नमयादीनांपंचानांब्रह्मत्वमुपपाद्यान्नमयस्यैवाब्रह्मत्वेआंतरानुपपत्तिंचाह ॥ नचेति ॥ अन्ननामाचान्नसंस्थइत्युक्तरीत्यान्नशब्दस्यानिरुद्धनामकपरब्रह्मत्वमनंगीकृत्यप्रसिद्धान्नपरत्वांगीकारे अन्नमयंप्रत्युदाहृतश्लोके । अद्यतेत्तिचभूतानितस्मादन्नंतदुच्यतइत्यन्नशब्दोनिरुच्यते । तदयुक्तंस्यात् । प्रसिद्धान्नेभूताद्यत्वस्यकथंचित्संभवेपिभूतात्तृत्वस्यकथमप्यसंभवादितिभावः । ननुलौकिकान्नेअविद्यमानमप्यत्तृत्वमुपनिषदोच्यतेउपासनार्थं । साचाविद्यमानस्यापिसंभवति । योषितमग्निंध्यायीतेतिवदतोनतद्बाधकमित्यतआह ॥ येन्यथेति ॥ येन्यथाविद्युरुपासीरन्तेअन्यराजानः अन्येस्वाधमाःराजानोनियामकायेषांतेतथा । स्वाधमनियम्याभवंतितेक्षय्यलोकाभवंतीतिश्रुत्यर्थः । दोषःस्वावरनियम्यत्वादिरूपोनर्थः । नायंविशेष

भाष्यं ॥ नचलौकिकान्नस्यात्तृत्वमस्ति । येन्यथाविद्युस्तेन्यराजानस्तेक्षय्यलोकाभवंतीतिश्रुतेरविद्यमानोपासनाद्दोषावगतेश्च ।

तोनर्थइत्यतआह ॥ **नचेति** ॥ आत्महनइत्ययुक्तं । तस्यनित्यत्वादित्यतउक्तं । असदुपासनयेति । नरमंति सुखवंतोनभवंति । च शब्दान्नित्यदुःखमनुभवंतीतिसमुच्चिनोति । यथोक्तंश्रुतिगीतातात्पर्ये । नरमंति नित्यदुःखंचानुभवंतीतिचशब्देनोक्तमिति । येन्यथाविदुरितिश्रुत्युदाहरणंतुसज्जनस्यैवदुःसंगत्याकदाचिदन्यथोपास्तिप्रसक्तौसत्यांतस्येदंफलमुच्यतइतिज्ञापयितुं । तथाच येसंतएवदुःसंगात्यद्यन्यथाविद्युस्तर्हितेक्षय्यलोकाअनित्यनरकभाजोभवंति । तदनंतरंभूमौजन्मलब्ध्वाऽन्यराजानोभवंतीति ज्ञातव्यमितिसंप्रदायविदः । स्फुटंचात्रप्रमाणमाह ॥ **नाविद्यमानमिति** ॥ वैदिकावेदानुसारिणोग्रंथाश्च । ननुयोषितमग्निंध्यायीत इत्यविद्यमानोपास्त्यभिधायकवेदानांकथंव्याख्यानंकार्यमितिचेत्तत्राह ॥ **तस्मादिति** ॥ सत्यार्थतां अबाधितार्थवत्तां । तथाच अंगारसदृशीनारीघृतकुंभसमःपुमानितिवाक्यांतरानुसारेणयथाग्निसंबंधेकुंभस्थस्यघृतस्यद्रवीभावः एवंयोषित्संबंधेनापिपुरुषांतःकरणस्यद्रवीभावोभवति । अतःसापरित्याज्येतियोषित्यग्निसादृश्यमभिप्रेत्यैवयोषितमग्निंध्यायीतेत्युच्यते । नाद्वयभेदाभिप्रायेणेतिभावः । एवंनाविद्यमानमित्याद्युक्तप्रकारेण । किंततइत्यतआह ॥ **ज्ञानवानिति** ॥ अन्यथोपासनयाऽधरंतमोयांतीतिज्ञानवान् । अन्यथा अन्यथोपासकोनभवेदित्यर्थः । अत्राह । जीवएवान्नमयादिशब्दार्थोनब्रह्म । सह्यन्नविकारशरीरावच्छिन्नत्वाद्भवत्यन्नमयः । प्राणमनोबुध्यानंदोपाध्यवच्छिन्नश्चभवति । प्राणादिविकारोघटाकाशमिवघटविकारः । तेनप्राण

---

भाष्यं ॥ नचरमंत्यहोअसदुपासनयात्महनइतिचभागवते । नाविद्यमानंब्रुवतेवेदाध्यातुंनवैदिकाः । अविद्यमानंध्यायंतोयांतिसर्वेऽधरंतमः । तस्मात्सत्यार्थतांब्रूयाद्वेदानामपिसर्वशः । यएवंवेदसज्ज्ञानीज्ञानवान्नान्यथाभवेदितिवेदार्थविवेके ।

मयत्वाद्युपपत्तिः । तथाचसवाएषपुरुषइतिपरामर्शस्तदुपाधिविषयतयाश्लिष्टतरोभवति । रसशब्दश्चान्नस्थविभागव्यावर्तकोभवि
ष्यति । इदमितिनिर्देशश्चमुख्यार्थःसंपद्यते। प्राणमयादिषुसर्वत्रशिरःप्रभृत्यवयवानांवक्तव्यत्वेनतत्प्राप्तयेसिद्धस्यापिकथनोपपत्तेः।
शारीरत्वमवयवित्वंप्रियादियोगोब्रह्मपुच्छत्वंचेतिएतत्सर्वंजीवपक्षेसमंजसंभवति । नचवक्तव्यंशरीरादिकोशाएवकुतस्तर्हिनांगी
क्रियंते । तथाचान्नमयप्राणमयमनोमयविज्ञानमयानंदमयामेशुद्ध्यंतामितिश्रुत्यंतरानुगुण्यंचस्यादिति । कोशेषुब्रह्मशब्दाद्यनु
पपत्तेः । अन्यत्वमंतरत्वंशारीरत्वंचोपाध्यपेक्षयाजीवेप्युपपद्यते । ननुजीवपक्षेप्यनुपपत्तिरस्ति । तथाहिब्रह्मशब्दोहिनिर्बाधो
नपरमात्मनाविनोपपद्यते । अद्यतेत्तिचेतिसर्वाद्यत्वंसर्वात्तृत्वं प्राणंदेवाइतिसर्वदेवादिचेष्टकत्वं यतोवाचइतिवाङ्मनसागोचरत्वं
विज्ञानंदेवाःसर्वइतिसर्वदेवोपास्यत्वं ज्येष्ठत्वं सोकामयतेतिसंकल्पपूर्वकंस्रष्टृत्वं सर्वांतरत्वमित्यादीनिनाल्पतरज्ञानशक्त्यादिसंप
न्नेजीवेसंभवंति । कोह्येवान्यादितिचासंगतमेवस्यात् । तदेषाभ्युक्तेतिमंत्रवर्णसमाख्योक्तिश्चबाध्येत । तत्रसोश्नुतइत्युक्तस्यमोक्षस्य
जीवज्ञानादनुपपत्तेरतोनजीवोन्नमयादिशब्दार्थः । किंतुब्रह्मैवेतिचेत् मैवं । उपनिषदर्थानवबोधात् । अत्रहिजीवब्रह्मणोरेकत्वंत
त्वतोविवक्षितं । तत्रयानिवाक्यानिशुद्धविरोधीनितान्युपहितसंसारिस्वरूपापेक्षाणि । ब्रह्मशब्दादीनितुतत्स्वभावसिद्धपरमात्मस्व
रूपापेक्षाणि । ऐक्येविवक्षाचात्रवाक्यशाबल्यान्यथानुपपत्त्यैवगम्यते । नचैवंजीवब्रह्मणोरैक्यविवक्षायांजीवःकुतोन्नमयादिश
ब्दार्थः परमात्मैवकिंनस्यात् । विनिगमनायांकारणाभावादितिवाच्यं । विशुद्धिविरोधिवाक्यानांपरमात्मनिसर्वथाप्यनुपपत्तेः ।
सत्यप्यभेदेमहाकाशधर्मएवावच्छिन्नाकाशेव्यवह्रियते यावान्वायमाकाशस्तावानेषोंतर्हृदयआकाशइति । नतुपरिच्छिन्नधर्मोवित

स्तिमात्रत्वंमहाकाशे। नचजीवपक्षेब्रह्मपुच्छंप्रतिष्ठेत्यनुपपन्नमितिवाच्यं। अस्यजीवस्यब्रह्मपुच्छमायतनमधिष्ठानंनिजस्वरूपमित्यर्थोपपत्तेरिति। तदेतन्निराकरोति। **सयश्चायमिति**। अधिकरणत्वेनेत्युपलक्षणं। अधिष्ठातृत्वेनेत्यपिग्राह्यं। परमात्परमात्मनः। स्यादेतदेवंकथंचिदुक्तंसमस्तं। यद्यस्यामुपनिषदिजीवपरमात्मनोरभेदएवविवक्षितःस्यात्। नचैवं। सयश्चायंपुरुषे यश्चासावादित्यइतिपुरुषादित्यशब्दोपलक्षितापकृष्टोत्कृष्टसकलजीवानांनियम्यतयाधिकरणत्वेन परमात्मनश्चनियामकतयाधिष्ठातृत्वेनभेदस्यैवोक्तत्वादित्यर्थः। उक्तंचानुव्याख्याने। आदित्येपुरुषेचायमितिभेदोपदेशतः। नास्याभेदोस्तिजीवेनेति। नन्वस्त्वेवंपरमात्मनाजीवानांभेदः। सचसंसारेआविद्यकएवाभिप्रेतोनपारमार्थिकः। अभिहितवाक्यस्यचताद्दशभेदपरत्वेनोपपत्तिरितिचेत्। मैवं। अस्मिन्प्रकरणेनिवृत्ताविद्यकस्यमुक्तस्यापिपरमात्मनाभेदस्यैवबहुवारमुक्तत्वादित्याह॥ **एतस्मिन्नित्यादिना**॥ विंदतइत्यनंतरं अथसोभयंगतोभवतीतिवाक्यशेषोपिग्राह्यः। इत्यादिनेत्यादिपदेन रसंह्येवायंलब्ध्वानंदीभवति सुवर्णज्योतीरितिचवाक्यंग्राह्यं॥ **भेदएवाभ्यस्यतेइति**॥ भेदकधर्मएवबहुवारमुच्यतइत्यर्थः। नत्वेकप्रकारासकृदुक्तिरूपोमुख्योग्राह्यः। ताद्दशस्यात्रादर्शनादितिज्ञातव्यं। अत्र एतस्मिन्नितिवाक्ये। प्रतिष्ठांविंदतइतिज्ञातृज्ञातव्यत्वयो रभयंगतोभवतीतिप्राप्तृप्राप्य

---

भाष्यं। सयश्चायंपुरुषे। यश्चासावादित्यइत्यधिकरणत्वेनभेदएवजीवस्यपरमादुक्तः। एतस्मिन्नद्दश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयंप्रतिष्ठांविंदते। एतमानंदमयमात्मानमुपसंक्रामति। सोश्नुतेसर्वान्कामान्सह। ब्रह्मणाविपश्चिता। एतमानंदमयमात्मानमुपसंक्रम्य। इमांल्लोकान्कामान्नीकामरूप्यनुसंचरन्नित्यादिनामुक्तस्यापिभेदएवाभ्यस्यते।

त्वयोश्चोक्त्याभेदएवावगम्यते । परमात्मप्राप्त्युक्त्याचमुक्तपरत्वं तत्प्राप्तेरेवमुक्तित्वात् । एतमितिवाक्येपिउपसंक्रामतीतिप्राप्तृप्राप्यभावोक्त्याभेदएवोच्यते । अस्माल्लोकात्प्रेत्येत्युक्तत्वाच्चमुक्तपरत्वं । सोश्नुतइत्यत्रब्रह्मणासहेत्युक्त्याभेदोलब्धः । सर्वकामावाप्त्युक्त्याचमुक्तपरत्वं । एतमितिभृगुवल्लीगतवाक्येप्युक्तरीत्याभेदस्तस्यमुक्तपरत्वंच । रसंह्येवायमित्यत्रलब्धृलब्धव्यत्वयोरुक्त्याभेदः । अस्यवाक्यस्य आनंदमेनंसंप्राप्यमुक्तोमोदेन्नचान्यथेतिप्रमाणेनमुक्तपरतयाव्याख्यातत्वान्मुक्तपरत्वंचावगम्यते । सुवर्णज्योतीरित्यत्रापिप्रेर्यप्रेरकभावोक्त्याभेदः । अस्माल्लोकात्प्रेत्येत्यारभ्याधीतत्वेनमुक्तपरत्वंचेत्यवगंतव्यं । सैषानंदस्येत्यादिनाक्रियमाणानंदमीमांसा संसार्यानंदविषयिण्येव नमुक्तानंदविषयिणीतिव्याख्यानं विदुषांनियमेनतु । स्यादेवमोक्षस्तत्रापिह्यानंदस्यविचित्रतेतिप्रमाणोदाहरणेनैवनिरस्त्युक्त्यापिनिरस्यति ॥ अथेत्यादिना ॥ मुक्तानंदोमीमांस्यतइत्यत्रहेतुरथेति । मुक्तिप्रस्तावात्मुक्त्युपक्रमादित्यर्थः । तथाचमुक्तिमुपक्रम्यतत्प्रकरणेअधीतं सैषानंदस्येतिवाक्यंमुक्तानंदमीमांसापरमेवेतिभावः । युक्त्यंतरंचाह ॥ श्रोत्रियस्यचेति ॥ मनुष्यगंधर्वानारभ्यसर्वत्रेत्यर्थः । चशब्दःप्रस्तावादित्युक्तयुक्तिसमुच्चायकइतिद्रष्टव्यं । तथाचश्रोत्रियत्वाकामहतत्वयोरन्यत्रामुक्तेऽसंभवात्तद्विशेषणयुक्तोमनुष्यगंधर्वादिर्मुक्तएवेतितदानंदएवमीमांस्यतइतिभावः । पूर्वटीकाकारास्तु उदाहृतवाक्येषुप्रतीतोभेदोमुक्तभेदइतिकुतइत्यतआह । अथेतीत्येवमथसोभयंगतोभवतीतिमुक्तिप्रस्तावादितिवाक्यंपूर्वग्रंथशेषत्वेनव्याख्याय सैषेत्यादिवाक्यद्वयंतु सैषानंदस्येत्येतन्मुक्तिपरतयाव्याख्यातं तत्कुतइत्यतः साधयितुंप्रति

भाष्यं ॥ अथसोभयंगतोभवतीतिमुक्तिप्रस्तावात् । सैषानंदस्यमीमांसेतिमुक्तानंदोमीमांस्यते । श्रोत्रियस्यचाकामहतस्येतिसर्वत्रविशेषणाच्च ।

पृथुत्वात् प्रकृष्टानंदबलतः सर्ववेत्तृतइत्येतैरपिसंबध्यते । तेनतदभेदेनतच्छब्दवाच्यत्वशंकापरिहारः । चतुर्भिःरूपैःपृथिव्यादिस्थितैःरूपैः । चतुरात्मभिःचतुरात्मनामभिःपृथिवीत्यादिभिः । भोग्यभोक्तिति अन्नान्नादशब्दार्थकथनं । ननुप्राणशरीरशब्दवाच्ययोःभगवद्रूपयोःपरस्परात्यंताभेदात्कथंभोक्तृभोग्यभावस्तस्यभेदव्याप्तत्वात् । एवं अज्ज्योतिरादिशब्दवाच्यरूपादावपीत्यतउक्तं क्रीडयेति । स्वयंस्वतंत्रः। स्वेच्छयेतियावत्। अतएववक्ष्यति इच्छयेति। ननुतथापिभोग्यभोक्तृभावेहीनोच्चभावःस्यादित्यतआह ॥ नचेति ॥ तस्य प्राणादिशब्दवाच्यविष्णुरूपस्य। शरीरादिशब्दवाच्यस्यविष्णुरूपस्यभोक्तृत्वमात्रेणोच्चत्वंचेत्यपिद्रष्टव्यं । कुतोनचेत्यतोभोग्यत्वेपिनहीनत्वमित्यत्रलौकिकंदृष्टांतमाह ॥ नहीति ॥ उपभोग्यः आलिंगनचुंबनोपरिसुरतादिना । एवंभार्याउच्चत्वंनाप्नुयादित्यपिद्रष्टव्यं । एवंविष्णोर्भोग्यत्वादिमात्रेणहीनोच्चभावोनास्तीतिप्रतिज्ञातं दृष्टांतमुखेनोपपाद्योपसंहरति ॥ एवमिति ॥ अविशेषो हीनोच्चत्वविशेषशून्यः । अन्नंननिंद्यात्तद्व्रतं अन्नंबहुकुर्वीततद्व्रतमित्यत्र प्रभिन्नमन्नं ननिंद्यात् भुक्तिसमयेभुंजीतान्नमकुत्सयन्निति स्मृतेः । तथा अन्नंबहुपक्वंकुर्वीत अतिथ्यभ्यागतभोजनार्थमित्यपव्याख्याननिरासायतद्वाक्यद्वयंव्याचष्टे ॥ अन्नाख्यंतंविष्णुमिति ॥ तंभगवंतंबहुमन्येत बहुगुणवत्त्वेनबहुकर्मवत्त्वेनमन्येत । तंभगवंतंप्रतिपादयेदित्य

भाष्यं ॥ एतैश्चतुर्भिर्भगवान्रूपैश्चचतुरात्मभिः । भोग्यभोक्तृस्वरूपेणतिष्ठतिक्रीडयास्वयं । नचभोग्यत्वमात्रेणहीनत्वंतस्यकुत्रचित् । नहिभार्योपभोग्यस्तुभर्ताहीनत्वमाप्नुयात् । एवंसभगवान्विष्णुरविशेषोखिलेष्वपि । रूपेषुक्रीडतेनित्यंभोक्ताभोग्यइतीच्छया । अन्नाख्यंतंनैवनिंद्याद्बहुमन्येततंसदा । इतितद्व्रतद्वयंह्येतद्वाव्यंयदिसुखेस्पृहा ।

र्थः । यदिसुखेमोक्षसुखेस्पृहाइच्छेतिउपनिषदिशेषपूरणं । अन्यथानरकादिदुःखंभविष्यतीतिभावः । तस्माद्ययाकयाचविधयाब ह्वन्नंप्राप्नुयादितिवाक्यं ययाकयाचविधया येनकेनापिप्रकारेण न्यायेनाऽन्यायेनवाप्राणात्ययकालेबह्वन्नंप्राप्नुयात् । यथोक्तं स र्वान्नानुमतिश्चप्राणात्ययेतद्दर्शनादितिव्याख्यातं । तदसदितिभावेनाह ॥ येनकेनापिविधिनेति ॥ येनकेनापिविहितप्रकारेण गुरुसेवादिरूपातियत्नेनेतियावदित्यर्थः । यद्वाबहुभ्यःश्रोतव्यंबहुधाश्रोतव्यं । नह्येकस्माद्गुरोर्ज्ञानंसुस्थिरंस्यात्सुपुष्कलं । ब्रह्मैतद द्वितीयंहिगीयतेबहुधर्षिभिरितिवचनात् । अनेकगुरुमुखैरनेकप्रकारेणश्रवणरूपातियत्नेनेत्यर्थः । मननद्वारेतिपूरणीयं । बह्वित्येव पूर्णमित्येव । भूम्नःक्रतुवज्ज्यायस्त्वं भूमैवदेवःपरमोह्युपास्यइतिस्मृतिश्रुतिभ्यांपूर्णत्वोपासनस्यावश्यकत्वावगमादितिभावः । मत्वे ति उपासनांकृत्वेत्यर्थः । यएवंसमुपासीतेत्युत्तरत्रानुवादात् । इदंचश्रुतौशेषपूरणं । अराध्यस्माअन्नमित्येतद्व्याचष्टे ॥ यएवमि ति ॥ अराधीत्यस्यार्थः सिद्धइति । अपरोक्षतोज्ञातइत्यर्थः । राधसाधसंसिद्धावितिधातोः । सम्यक्सिद्धिश्चापरोक्षज्ञानमेवेति भावः । आचक्षतइत्यत्रकर्तृपूरणं विद्वांसइति । परिनिष्ठिताः एतत्प्रमेये । परिनिष्ठाविनिश्चयइतिवचनात्सम्यक्निश्चयवंतः । आग्रहविशेषवंतइतियावत् । एतद्वैमुखतइतिवाक्यमप्रतीतेर्व्याचष्टे ॥ यस्येति ॥ येनेत्यर्थः । आप्यतेप्राप्यतइत्यर्थः । मुखत इत्यस्यार्थःपूर्वमिति । पूर्वस्मिन्वयसीत्यर्थः । बाल्यइतियावत् । राद्धमित्यस्यार्थःसंसिद्धमिति । सम्यक्ज्ञातंश्रवणायप्रारब्ध

भाष्यं ॥ येनकेनापिविधिनाबह्वित्येवजनार्दनं । मत्वैवप्राप्नुयान्नित्यंमनोवाक्कायवृत्तिभि· । यएवंसमुपासीततस्यान्नाख्योहरिस्स्वयं । सिद्धइत्ये- वहिप्राहुर्विद्वांसःपरिनिष्ठिताः । यस्यतद्ब्रह्मसंसिद्धंपूर्वं

मितियावदितिसंप्रदायः । मुखतोस्मान्न२ राध्यतेइतिवाक्यमप्रतीतेर्व्याचष्टे ॥ **तेनेति** ॥ अस्माइत्यस्यार्थःतेनेति । मुखतइत्यस्यार्थोग्रतइति । राध्यतइत्यस्यार्थःआप्यतइति । तथाचमुखतःअग्रतः । तसेःसार्वविभक्तिकत्वादग्रतोग्रं । मुखमितियावत् । आप्यते अपरोक्षीक्रियते।अनंतरंमुक्तावपितथैवपश्यतीतिद्रष्टव्यं।एतद्वैमध्यतोन्न२ राद्धमित्येतद्व्याचष्टे॥**मध्येवयसीति**॥ तत्रमध्यतइत्यस्यार्थोमध्येवयसीति।सिद्धंज्ञातं श्रवणायप्रारब्धमितियावत्।मध्यतोस्मान्न२ राध्यतइत्येतद्व्याष्टे॥**मुक्तइति**॥मध्यतइत्यस्यार्थोमध्यमिति ।राध्यतइत्यस्यार्थःप्रपश्यतीति । मध्यंप्रपश्यतिसम्यक्साक्षात्करोति । एवमपरोक्षज्ञानानुसारेणैवमुक्तोपिमध्यमेवसम्यक्प्रपश्यतीतियोज्यं । एतद्वाअंततोन्न२ राद्धमित्येतद्व्याचष्टे ॥ **वार्धकेचेदिति** ॥ अंततइत्यस्यार्थोवार्धकइति । राद्धमित्यस्यार्थोविजानातीति । श्रवणायप्रारब्धमितियावत् । अंततोस्मान्न२ राध्यतइत्यत्रांततइत्यस्यार्थःपादाविति । राध्यतइत्यस्यार्थःप्रपश्यतीति । सम्यगपरोक्षीकरोति । एवमेवमुक्तोपिप्रपश्यतीतियोज्यं । नन्वेवमपरोक्षज्ञानकालेमुक्तौचमुखादिमात्रदर्शनेइतरांगदर्शनाभावएवकिमित्याशंकायांतत्रविशेषमाह ॥ **तेजोमंडलमेवेति** ॥ यदंगंस्पष्टंपश्यति तदन्यदंगंतेजोमंडलमेव तेजःपुंजमेवपश्यतिनस्पष्टमित्यर्थः । यएवंवेदेत्येतन्नोक्तानुवादरूपं । उत्तरत्रफलानुक्तेरित्यभिप्रेत्यतद्वाक्यंव्याचष्टे ॥ **पूर्वेवयसीति** ॥ आमुखात् मुखमारभ्य । सर्वदृष्टये सर्वावयवदृष्टये । अनेनश्रुतौयइत्यनंतरंसर्वावयवापरोक्षज्ञानकामःस्यादितिशेषःपूरणीयइत्यु

भाष्यं ॥ तेनाप्यतेग्रत । मध्येवयसिचेत्सिद्धमुक्तोमध्यंप्रपश्यति । वार्धकेचेद्विजानातिमुक्त पादौप्रपश्यति । तेजोमंडलमेवान्यदंगंविष्णो प्रपश्यति । पूर्वेवयसिबोद्धव्यमामुखात्सर्वदृष्टये ॥ ९ ॥ ११ ॥

क्तंभवति । एवमित्यस्यार्थःपूर्ववयसीति । पूर्ववयःसमारभ्यवार्धकपर्यंतमित्यर्थः । वेदेत्येतद्यत्ययेनविधिरूपतयाव्याख्येयमित्यभि प्रेत्यबोद्धव्यमितितव्यप्रत्ययप्रयोगइतिज्ञातव्यं । अयमिहसंप्रदायः । विद्युद्धन्मानुषाविद्युरितिवचनात् यःसात्विकप्रकृतिर्मनु ष्योत्तमोनादिकालादारभ्यभगवज्ज्ञानशून्योभगवदनुग्रहेणैवदैवादादौबाल्यएवलब्धसत्संगतिस्तद्वशादन्यदगणयन्स्थितोबाल्य एवश्रवणादियत्नंकृत्वापश्चात्परित्यक्तवान् सएवमनेकजन्मभिःसिद्धस्सन्यदिभगवद्रूपंयोग्यतापरिपाककालेपश्यति तर्हिमुखमे वसम्यगेवअपरोक्षीकरोति । इतरांगंतेजःपुंजमेवपश्यति नसम्यक् एवंमुक्तावपि । यदिसात्विकप्रकृतिःपुमान्मध्येवयसिसत्सं गतिंलब्ध्वाश्रवणादियत्नायप्रारब्धवान् पश्चाच्चपरित्यक्तवान् तर्हिसः योग्यतापरिपाकानंतरंअपरोक्षज्ञानकालेमध्यमेवादौसम्य क्प्रपश्यति । इतरांगंतुतेजःपुंजमेवपश्यतिनसम्यक् । एवंमुक्तावपि । यदिचसात्विकप्रकृतिःपुमान्वार्धकेसत्संगतिंलब्ध्वाश्रवणा दियत्नायप्रारब्धवान्सःअपरोक्षज्ञानसमयेपादावेवादौसम्यक्प्रपश्यति । इतरांगंतुतेजःपुंजमेवपश्यतिनसम्यगेवंमुक्तावपीति । उपासनाप्रारंभपरमिदमित्याहुः ॥ ९–११ ॥ भगवदुपासनांतराण्याह । क्षेमइतिवाचीत्यादिना । तत्रक्षेमइतिवाचीत्येतद्व्याचष्टे ॥ **क्षेमकृत्त्वादिति** ॥ भक्तानांक्षेमकृत्त्वादित्यर्थः । योगक्षेमइतिप्राणापानयोरितिवाक्यंउभयत्राप्युभयथोपासनमुच्यतेइत्य न्यथाप्रतीतिनिरासाय योगइतिप्राणे क्षेमइत्यपानेइत्येवंविविच्यव्याचष्टे ॥ **योगनामेत्यादिना** ॥ प्राणेस्थितइतिशेषः । ए वमपानेपर्जन्येवायौदक्षेनक्षत्रेषुशिवेप्रकृतावित्यत्रापिशेषोद्रष्टव्यः । योगोयोजनंनियोजनमित्येवयोगशब्दार्थः । सर्वकामेतियो

भाष्यं ॥ क्षेमकृत्त्वात्क्षेमनामावाचिस्थस्सपरोहरिः । योगनामातथाप्राणेसर्वकामनियोजनात् । क्षेमनामाक्षेमकृत्त्वादपानेहिहरिस्स्वयं ।

ग्यतयालाभः । कर्मेतिहस्तयोरितिवाक्यंव्याचष्टे ॥ **कर्मनामेति** ॥ कर्मकृत्त्वात् कर्मकर्तृत्वात् । गतिरितिपादयोरितिवाक्यं व्याचष्टे ॥ **गतिदत्वादिति** ॥ गतिर्ज्ञानं मोक्षोवा तद्दातृत्वादित्यर्थः । विमुक्तिरितिपायावितिवाक्यंविमुक्तिपदंप्रसिद्धमुक्ति परमितिप्रतीतिंवारयन्व्याचष्टे ॥ **विसर्गकृदिति** ॥ मलादिविसर्गकृदित्यर्थः । इतिमानुषीःसमाज्ञाइतिवाक्यतात्पर्यमाह ॥ **अध्यात्मस्थइति** ॥ मानुषशब्दार्थोध्यात्मेति । तथाचात्मानंमानुषंदेहंअधिकृत्यविद्यमानं यद्वागादींद्रियं तत्रस्थोहरिरितिक्षे मादिशब्दवाच्यतयोपास्यत्वेनप्रोक्तइत्यर्थः । अथदैवीरित्यस्यतात्पर्यं ॥ **अथाधिदैवगतमिति** ॥ हरिमितिशेषः । देवतासंबं धिदैवं वृष्ट्यादि तदधिकृत्यतदभिमानितयाविद्यमानादेवाअधिदैवमित्युच्यंते । तद्गतंहरिमित्यर्थः । अथदैवीरित्युपक्रम्य वृ ष्ट्यादौजडेतृप्त्यादिरूपेणभगवदुपासनंकथ्यतइतिप्रतीतिनिरासायतृप्तिरितिवृष्टावितिवाक्यंतावद्व्याचष्टे ॥ **पर्जन्यइति** ॥ वृष्टि शब्दार्थःपर्जन्यइति । पर्जन्यःआदित्यः । पर्जन्यादन्नसंभवइत्यत्रगीताभाष्येतथोक्तत्वात् । बलमितिविद्युतीतिवाक्यंव्याचष्टे॥ **वायौचेति** ॥ विद्युच्छब्दार्थोवायाविति । सदाबलदत्वादेवेतिसंबंधः । यशइतिपशुष्वितिवाक्यंव्याचष्टे ॥ **यशःप्रदत्वादि ति** ॥ पशुशब्दार्थोदक्षइति । यशःप्रदत्वाद्यशः । यशइतिनामवानित्यर्थः । किंपश्वभेदेनपशुशब्दवाच्यत्वं नेत्याह ॥ **पश्वभि**

---

भाष्यं ॥ कर्मनामाहस्तगतःकर्मकृत्त्वाज्जनार्दनः । गतिदत्वाद्गतिर्नामपादस्थःपुरुषोत्तमः । विसर्गकृद्विमुक्त्याख्य पायुस्थ.परमोविभुः । अध्यात्मस्थइतिप्रोक्तोऽथाधिदैवगतंशृणु । पर्जन्येतृप्तिनामासौतृप्तिदत्वाज्जनार्दन । वायौचबलनामाचबलदत्वात्सदैवहि । यशःप्रदत्वाद्दक्षे- तुयश.पश्वभिमानिनि ।

**मानिनीति** ॥ ज्योतिरितिनक्षत्रेष्वितिवाक्यंव्याचष्टे ॥ **नक्षत्रेष्विति** ॥ अश्विन्यादिष्वित्यर्थः । ज्योतिर्दातृत्वतः प्रकाशदातृत्वतः । प्रजातिरमृतमानंदइत्युपस्थेइतिवाक्यंव्याचष्टे ॥ **उपस्थमानिनीति** ॥ उपस्थंगुह्येंद्रियं । प्रजात्यानंदाभ्यांसहितासंततिःप्रजात्यानंदसंततिस्तस्याइतिव्याख्येयं । प्रजातिःपुत्रउच्यतइतिवचनात्पुत्रदातृत्वात्प्रजात्याख्यः । आनंददातृत्वादानंदाख्यः संततिःसंतानपरंपरा । तद्दातृत्वात्तदाख्यइत्यर्थः । ननुतर्हिसंततिशब्दवाच्यत्वमेवप्राप्तंनत्वमृतशब्दवाच्यत्वं । नह्यत्रसंततिशब्दःश्रूयतइत्यतआह ॥ **संततिरिति** ॥ अमृतंसंततिरितिस्मृतमित्यर्थः । पौत्रादिरूपसंतानपरंपरासंततिः । सर्वमित्याकाशइतिवाक्यंव्याचष्टे ॥**सर्वमिति**॥ सर्वप्रदत्वात् सत्ताप्रतीतिप्रवृत्त्यादिसर्वप्रदत्वादित्यर्थः । आकाशशब्दार्थःप्रकृताविति ॥ १२ ॥ आकाशशब्दवाच्यप्रकृतिस्थःपुरुषोत्तमःसर्वमित्युपास्यइत्युक्त्वापुनस्तस्यैवोपास्यगुणानाह । तत्प्रतिष्ठेत्युपासीतेत्यादिना । तत्रतत्प्रतिष्ठेतिवाक्यंव्याचष्टे ॥ **सप्रतिष्ठेति** ॥ सआकाशस्थोहरिः स्थापकत्वात् तत्तत्पदेसर्वदेवादिस्थापकत्वादित्यर्थः । तन्मनइत्युपासीतेतिवाक्यंव्याचष्टे ॥ **मनइति** ॥ मान्यत्वतःपूज्यत्वतः । तन्नमइत्युपासीतेत्येतत्व्याचष्टे ॥ **नमइति** ॥ णमप्रह्वत्वेशब्देचेतिधातोःकर्मणियत्प्रत्ययेनम्यत्वतःशब्द्यत्वतः सर्वदेवैःस्तुत्यत्वतइत्यर्थः । एतदभिप्रायेणैवाद्यपद्येसर्वैर्देवैरीड्यमित्युक्तमितिज्ञातव्यं । तन्महइत्युपासीतेतिवाक्यंव्याचष्टे ॥ **महश्चापीति** ॥ महत्त्वतःव्याप्तत्वादित्यर्थः । तद्ब्रह्मणःपरिमरइत्युपासी

भाष्यं ॥ नक्षत्रेषुज्योतिराख्योज्योतिर्दातृत्वतोहरिः । उपस्थमानिनिशिवेप्रजात्यानंदसंततेः । दातृत्वात्तत्तदाख्योसौसंततिस्त्वमृतंस्मृतं । सर्वं सर्वप्रदत्वान्नुप्रकृतौपुरुषोत्तमः ॥ १२ ॥ सप्रतिष्ठास्थापकत्वान्मनोमान्यत्वतोहरिः । नमोनम्यत्वतोनित्यंमहश्चापिमहत्त्वतः ।

तेतिवाक्यंव्याचष्टे ॥ **विरिंचेति** ॥ तद्ब्रह्मेत्युपासीतेतिवाक्यंव्याचष्टे ॥ **ब्रह्मेति** ॥ १३ ॥ सयएवंविदितिवाक्यं यएवंविदित्यनेन सयश्चायमित्युक्तप्रकारएवपरामृश्यतइतिप्रतीतिं सर्वसाधारण्यप्रतीतिंचवारयन्व्याचष्टे ॥ **वेदैनमिति** ॥ पंचरूपिणमित्येतदत्रापिसंबध्यते । तत्वतइति स्फुटमित्यर्थः । अतएववक्ष्यतिब्रह्मैनंपश्यतिस्फुटमिति । एतमन्नमयमात्मानमुपसंक्रम्येत्यादेस्तात्पर्यं सएनंपंचरूपिणंप्राप्येति । पंचरूपिणमितिकर्मधारयादिनिः । इदमुपलक्षणं । अष्टरूपिणमितिद्रष्टव्यं । एतत्सामगायन्नास्तेइत्यादेस्तात्पर्यं गायतीति । अस्माल्लोकात्प्रेत्येत्यस्यतात्पर्यं मुक्तःसन्निति । अहमन्नमित्येतत्व्याचष्टे ॥ **अन्ननामास्मीति** ॥ तत्रहेतुःभोग्यतइति । भोग्यत्वतःअद्यत्वतः । मुक्तस्वावरान्प्रत्युपजीव्यत्वादित्यर्थः । यथोक्तं । उपजीव्यत्वमेवचाद्यत्वमिति । अहमन्नादइत्येतद्व्याचष्टे ॥ **यथेष्टमन्नभोक्ताचेति** ॥ यथेष्टभोगभोक्ताचेत्यर्थः । अहंश्लोककृदित्येतद्व्याख्याति ॥ **कीर्तिकर्तेति** ॥ कीर्तीतिश्लोकशब्दार्थः । शिष्येषुभगवदुपदेशेनतत्कीर्तिविस्तारकर्तेत्यर्थः । यद्वाएतादृशमहिमोपेतोहंहरेःपुत्रइतिहरेःकीर्तिकर्तेत्यर्थः । तथाहि । लोकेपुत्रमहिम्नापितुःकीर्तिर्दृष्टेति ॥ १४ ॥ अहमस्मिप्रथमजाऋताइतिवाक्यंव्याचष्टे ॥ **ऋतरूपस्येति** ॥ ऋतंयथार्थविज्ञानमित्युक्तत्वेनयथार्थज्ञानस्वरूपस्येत्यर्थः । यद्वा ऋगताविति धातोस्तुपूर्वावगतवत्सदा । स्थितेर्ब्रह्मर्तमित्युक्तमितिवचनात्पूर्वावगतवत्सदास्थितस्येत्यर्थः । किंमनुष्येभ्यःप्रथमजःपुत्रइतिशंकापरिहारायोक्तं पूर्वंदेवेभ्यइति ।

---

भाष्यं ॥ विरिंचमारकश्चासौब्रह्मपूर्णगुणत्वतः ॥ १३ ॥ वेदैनंतत्वतोब्रह्मासएनंपंचरूपिणं । प्राप्यगायतिमुक्तस्सन्नन्ननामास्मिभोग्यतः । यथेष्टमन्नभोक्ताचकीर्तिकर्ताहरेस्तथा ॥ १४ ॥ ऋतरूपस्यविष्णोस्तुपुत्रःप्रथमजोह्यहं ।

तद्व्याचष्टे ॥ **देवेभ्यइति** ॥ पूर्वभावव्यपेक्षयेदमितिज्ञातव्यं । अमृतस्यनाभाइत्येतत्व्याचष्टे ॥ **मुक्तानामिति** ॥ अनेनामृतस्येत्येकवचनंसमुदायापेक्षमित्युक्तंभवति । नाभिशब्दार्थःआश्रयइति । योमाददातिसइदेवमावाइत्येतत्दुर्गमार्थत्वाद्व्याचष्टे ॥ **योददातीति** ॥ यो माः ज्ञानानि ददात्युपदिशतीत्यर्थः । तस्यतात्पर्यं विष्णुतत्वप्रदर्शकइति । शिष्येषुविष्णुतत्वप्रदर्शकस्तदुपदेष्टेत्यर्थः । क्वचिद्विष्णुतत्वप्रदर्शिकाइतिपाठः । तत्रविष्णुतत्वविषयिकाइत्यर्थः । इदंचमाशब्दोक्तज्ञानविशेषणमितिज्ञातव्यं । सइदेवेत्यस्यार्थः सइत्थमेवेति । इदित्यस्यार्थइत्थमिति । इत्थमेवअतिनिश्चयेनेतियावत् । मावाइत्यस्यार्थो मां यातीति । वागतिगंधनयोरितिधातोर्वातेर्गत्यर्थत्वादित्यर्थः । इदमपिपूर्वभावव्यपेक्षयेत्यत्रगंतव्यं । तथाचयोधिकारीप्रतीकालंबनोमाःज्ञानानिशिष्येभ्योददात्युपदिशति सःतदादिसाधनजनितापरोक्षज्ञानानंतरं भुक्तप्रारब्धकर्मा चरमदेहादुत्क्रांतःसन् अर्चिरादिपथा इदेव इत्थमेव अतिनिश्चयेनेतियावत् । मामां वाःयातीतियोजनाद्रष्टव्या । यथोक्तं । कार्यंबादरिरस्यगत्युपपत्तेरिति । अहमन्नमित्येतत्पुनरुक्तिपरिहारायव्याचष्टे ॥ **विष्णोरन्नमिति** ॥ नृसिंहरूपिणाविष्णुनाहमद्यःसंहार्यः । ब्रह्मचर्मशिरःपदीत्यादिवचनादित्यर्थः । सदेत्यविगानंसूचयति । यद्वाविष्णुकर्तृकभोगविषयइत्यर्थः । तथाहि । भगवान्कदाचित्स्वेच्छया गृहीतस्त्रीरूपवतामुक्तब्रह्मणासहमिथुनीभूयक्रीडतइतिप्रसिद्धं । यथोक्तंछांदोग्यभाष्येसप्तमाध्याये । आत्मक्रीडआत्ममिथुनइत्यत्र । भूमोपासनयोग्यस्तुसाक्षाद्ब्रह्मैवमुख्यतः । सतद्विद्याबलेनैवविष्णुनारतिमाप्नुयात् । तेनैवक्रीडतेनित्यंस्त्रीरूपोमिथुनी

भाष्यं ॥ देवेभ्य पूर्वजश्चाहंमुक्तानामाश्रयस्सदा । योददातिचमांसम्यग्विष्णुतत्वप्रदर्शकः । सइत्थमेवमांयातिविष्णोरन्नमहंसदा ।

भवेदिति । अतएवकामरूप्यनुसंचरन्निति मुक्तब्रह्मणःकामरूपत्वमुक्तमित्यवगंतव्यं । अन्नमदंतंजीवजातमहमद्मीतिअक्षरार्थमभिप्रेत्यतत्तात्पर्यमाह ॥ **ममान्नमिति** ॥ सर्वजीवाइत्यनेनान्नमदंतमित्येकवचनंसमुदायापेक्षमित्युक्तंभवति । सर्वजीवानांकुतोन्नत्वमित्यतआह ॥ **भोग्याममेति** ॥ मदुपजीव्याःमयासंहार्याएवेत्यर्थः । अहंविश्वंभुवनमभ्यभवामित्येतद्व्याचष्टे ॥ **सर्वमभ्यभवमिति** ॥ अहंनित्यकैःस्वार्थेकः नित्यभूतैःसर्वैरानंदादिभिर्गुणैःसर्वभुवनंसरस्वत्यादिजीवजातं अभ्यभवं अभिपरितः अभवं वरोभवं तदुत्तमोस्मीत्यर्थः । परिभवतिसर्वानितिपरिभूः सर्वतोवरइत्येवमीशावास्येव्याख्यातत्वेनतद्रीत्यात्रापितथैवव्याख्येयं । विश्वोत्तमत्वोक्त्यानममस्वातंत्र्यंमंतव्यमित्याशयेनोक्तं सुवर्णज्योतीरित्यादिना । तत्रसुवर्णज्योतिः सुवर्णवत्प्रकाशवानित्यन्यथाप्रतीतिनिरासायव्याचष्टे ॥ **सुवर्णइति** ॥ सुवर्णज्योतिश्चभगवान्विष्णुरित्यन्वयः । सुष्टुपरमानंदरूपत्वप्रकाशरूपत्वनिमित्ताभ्यामितिशेषः । सःसुवर्णज्योतिःशब्दवाच्योविष्णुः ईःइत्यस्यार्थःईरकइति । प्रेरकइत्यर्थः । तथाचसुवर्णज्योतिःविष्णुः ईःप्रेरकोयस्यमम सोहंसुवर्णज्योतीरित्यर्थः । यएवंवेदेत्यनेनएतत्प्रमेयवेत्तुरन्यस्याधिकारिणःफलमुच्यतइत्यसत् । तददर्शनात् । यएवंवेदससुवर्णज्योतिर्भवति इतिव्याख्यानेतुसुवर्णोभगवानितिप्रमाणविरोधापत्तेः । तंत्रतस्यभगवत्परत्वेनव्याख्यातत्वात् । अतइदमपिमुक्तब्रह्मवचनमेव । तर्हियएवंवेदेत्ययुक्तमितिचेन्न । लकारव्यत्ययेनवेद्मीत्यर्थांगीकारात् । नचसाकांक्षतयावाक्याभासत्वमितिवाच्यं । योहमेवंअन्नमयादिपंचरूपिणभगवंतं सृष्ट्यादिलक्षणयुक्ततयासुवर्णज्योतीरित्युक्तप्रकारे

---

भाष्य ॥ ममान्नसर्वजीवास्तुभोग्याममयतस्सदा । सर्वमभ्यभवचाहगुणैस्सर्वैश्चनित्यकैः । सुवर्णोभगवान्विष्णुर्ज्योतिस्समममचेरक ।

णमत्प्रेरकत्वेनचवेद वेद्मि । तस्यैवंवेत्तुर्ममभाधवोलक्ष्मीपतिर्विष्णुःपतिःस्वामीपालकश्चेत्यध्याहारकरणात् । नचैतदप्रामाणिकं व्याख्यानं । प्रमाणेतथाव्याख्यातत्वादित्यभिप्रेत्याह ॥ योहमिति ॥ अतोममभगवत्प्रेरितत्वेनस्वातंत्र्याभावात्तदनुग्रहेणाहंविश्वंभुवनं अभ्यभवामित्युक्तंसामर्थ्यमुपपन्नमितिभावः । इत्युपनिषदित्यत्रइतीत्यस्यान्वयंदर्शयति ॥ इतिब्रह्मेत्यादिना ॥ अनेनइतीत्यस्यसामगायन्नास्तइतिपूर्वेणसंबंधउक्तोभवतीतिज्ञातव्यं । अन्नंनपरिचक्षीतेत्यस्यप्रमाणेनाव्याख्यातत्वादन्यथाप्रतीतिनिरासायस्वयंव्याचष्टे ॥ अन्नमिति ॥ निराकरणंनामायोग्येषुउपदेशएव । तन्नकुर्यादित्यर्थः । एवमव्याख्याने अन्नंनिंद्यादित्यनेनपौनरुक्त्यापत्तेरितिज्ञातव्यं । अन्नंबहुकुर्वीतेत्येतत् बहुमन्येततंसदेतिप्रमाणेनव्याख्यातमपितात्पर्याप्रतीतेःस्वयंस्पष्टंव्याकुर्वन्नेवतात्पर्यमाह ॥ तद्गुणानिति ॥ कुत्रापि यत्रकुत्रापिसत्सभायां । बहुगुणत्वेनेत्युपलक्षणं । बहुकर्मत्वेनेत्यपिद्रष्टव्यं । तस्माद्ययाकयाचविधयेत्येतत् न्यायेनवाअन्यायेनवाबह्वन्नंप्राप्नुयादित्यन्यथाप्रतीतिनिरासाय येनकेनापिविधिनाबह्वित्येवजनार्दनं । मत्वैवप्राप्नुयान्नित्यमितिप्रमाणेनव्याख्यातं । इदानींतदनूद्यस्वयंप्रकारांतरेणव्याख्याति ॥ ययाकयाचेति ॥ ययाकयाचविधयेत्यत्र चशब्दोप्यर्थइत्यभिप्रेत्य विहितप्रकारेणापीत्युक्तं । तस्यैवविवरणमतिप्रयत्नेनापीति । गुर्वादिसेवारूपातिप्रयत्नेनापीत्यर्थः । बह्वित्यस्यार्थो बहुतरामिति । अन्नमित्यस्यतात्पर्यं भगवद्विद्यामिति । अहमस्मिप्रथमजाऋतस्य अन्नम



भाष्यं ॥ योहमेवंविदभवंतस्यमेमाधव.पति. । इतिब्रह्मागायमानोमुक्तश्चरतिसर्वदेतियजुस्संहितायां । अन्नंभगवंतंनपरिचक्षीत । ननिराकुर्यात् । तद्गुणांस्तत्कर्माणिवाकुत्रापिबहुकुर्वीत । बहुगुणत्वेनप्रतिपादयेद्भगवंतं । ययाकयाचविधयाबह्वन्नंप्राप्नुयात् ।

दंतमाह्मि अहंविश्वंभुवनमभ्यभवामितिवाक्यत्रयं मुक्तविरिंचिपरतयाप्रमाणेनव्याख्यातं । ततृतदायुक्तंस्या द्यदिब्रह्मणःप्रथम जातत्व मन्नादातृत्वं विश्वोत्तमत्वंचसिद्धंस्या त्तदेवकुतइत्यतस्तत्रप्रमाणमाह ॥ प्रजापतिरिति ॥ प्रजापतिश्चतुर्मुखःऋतस्य यथार्थज्ञानरूपस्यविष्णोः प्रथमजाःप्रथमपुत्रइत्यर्थः । आत्मशब्दस्य यच्चातिविषयानिह । तस्मादात्मेतिभण्यतइतिवचनेनाद भक्षणइतिधातुनिष्पन्नतया आत्मानं अन्नादिविपयात्तारंजीवजातं । अभिप्रति आत्मनास्वेच्छयासंवभूव अदनायेतिशेषः । स म्यक्स्थितोबभूव । अभक्षयदितियावदित्यर्थः । यद्वा धात्वर्थबाधतेकश्चित्कश्चित्तमनुवर्ततइतिवचनेनोपसर्गाणांधात्वर्थबाधक तायाउक्तत्वादभीत्युपसर्गबलेनभूधातुरेवादनार्थ स्तथाचाभिसंबभूव अभक्षयदित्यर्थः । परिताबभूवेत्यत्र परि ता इतिपदच्छे दः। हेप्रजापतेभवान् एतानि प्रत्यक्षसिद्धानि तानि परोक्षाणि अतींद्रियाणीतियावत्। जातानि उत्पत्तिमंति विश्वा विश्वानि सर्ववस्तूनि परिबभूव परितोभूतवान्वशीकृतवान् । तत्स्वामित्वेनवर्तते तदुत्तमइतियावत् । त्वत्त्वत्तोन्यस्तुनपरिबभूव तदु त्तमोनभवतीत्यर्थः । छंदसिपरेपि व्यवहिताश्चेतिवचनात्परीत्युपसर्गस्य ताइत्यनेनव्यवधानंनदोपायेतिज्ञेयं । इत्यादिनावाक्ये न एतज्ज्ञानं अहमस्मिप्रथमजाइत्यादिगानं विरिंचस्यैव । तत्कर्तृकमेवेत्यवसीयतइतिशेषः । आदिपदेन योब्रह्माणंविदधातिपूर्वं मित्यादिवाक्यग्रहणं । नन्वहंविश्वंभुवनमभ्यभवामित्युक्तंविश्वस्वामित्वंविरिंचस्यैवकुतः । अन्यस्यापिकिन्नस्यादित्यतआह ॥

भाष्यं ॥ अतिप्रयत्नेनापिविहितप्रकारेणबहुतरांभगवद्विद्यांप्राप्नुयात् । प्रजापतिःप्रथमजाऋतस्य आत्मनात्मानमभिसंबभूव । प्रजापतेनत्वदे- तान्यन्योविश्वाजातानिपरिताबभूवेत्यादिनाविरिंचस्यैवैतज्ज्ञानं ।

अन्यइति ॥ इत्येवं प्रजापतिशब्दोक्तविरिंचान्यस्यविश्वस्वामित्वनिषेधात्युक्तमवधारणमित्यर्थः । सयएवंविदितिवाक्यंप्रमाणे वेदैनंतत्वतोब्रह्मेतिब्रह्मपरत्वेनव्याख्यातं । इतोपितत्ब्रह्मपरमेव नसर्वसाधारणं । सयएवंविदित्यत्रमुख्यामुख्ययोर्मुख्येसंप्रत्ययइतिन्यायेनस्फुटापरोक्षज्ञानरूपसम्यक्ज्ञानस्यैवविवक्षितत्वात् तादृशंचसम्यक्ज्ञानंब्रह्मणएवनान्येषां । अतएवप्रमाणे तत्वतइत्युक्तमित्यभिप्रेत्यमानुषानारभ्यब्रह्मपर्यंतंअपरोक्षज्ञानेतारतम्यंप्रमाणेनदर्शयति ॥ विद्युद्वदिति ॥ विद्युद्वत्सूर्यमंडलवदित्यादिकं अपरोक्षज्ञानेस्पष्टतातिशयापेक्षयेतिज्ञातव्यं । ब्रह्मज्ञानेपुनर्विशेषमाह ॥ ब्रह्माहीति ॥ स्थिरचिद्रूपःस्थिरज्ञानरूपः । भगवद्विषयकज्ञानस्यनकदापिचंचलीभावइत्यर्थः । विशेषतः इतरापेक्षयाविशेषेण । बहुलेपूर्णेभगवतिआत्माइंद्रियगणो यस्यब्रह्मणःसतथोक्तः । यथोक्तं । नमेहृषीकाणिपतंत्यसत्पथइति । यद्वा वेदानुक्तभारतोक्तबहुलभगवद्गुणविषयकज्ञानवत्त्वाद्बहुलात्मा । अथवाईशादन्यत्रालोचनेबहुलविषयिणीआत्माबुद्धिर्यस्यासौतथोक्तः । अन्येरुद्राद्याः अबहुलाःअबहुलात्मानः अबहुलज्ञानाइत्यर्थः । चंचलतेजसः चंचलज्ञाना नब्रह्मवत्स्थिरचिद्रूपाइत्यर्थः । हरिमित्यस्यपूर्वोत्तराभ्यांसंबंधः । तु विशेषेण एनं हरिं सम्यक् स्फुटं । अतःसयएवंविदितिवाक्यंब्रह्मपरमेवेतिभावः ॥ १५ ॥ ( इतिभाष्यार्थः ) ॥ ततश्चेयमक्षरयो

---

भाष्यं ॥ अन्योनपरिबभूवेतिनिषेधात् । विद्युद्वन्मानुषाविद्युत्सूर्यमंडलवत्सुराः । प्रतिबिबवच्चगिरिशोब्रह्मैनंपश्यतिस्फुटं । ब्रह्माहिस्थिरचिद्रूपोबहुलात्माविशेषतः । अन्येक्रमादबहुलास्तथाचंचलतेजसः । तस्मात्सम्यङ्नपश्यंतिहरिंब्रह्मातुपश्यतीतिहरिंवंशवचनाच्चब्रह्मैवैनंसम्यग्वेद । इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेतैत्तिरीयोपनिषद्भाष्येतृतीयाभृगुवल्लीसंपूर्णा ॥ ३ ॥

**जना** ॥ एवमन्नमयादिपंचरूपिणोब्रह्मणउपास्तिंब्रह्मवल्ल्यामभिधायतत्रैवसमाख्यात्वेनभृगुवरुणसंवादरूपामाख्यायिकांवक्तुं वेदपुरुषःपूर्वोक्तामेवशांतिंपठति ॥ **सहनाववत्वित्यादिना** ॥ व्याख्यातं ॥ १ ॥ तामेवाख्यायिकामाह ॥ **भृगुर्वैवारुणि रित्यादिना** ॥ वरुणस्यापत्यंपुमान्वारुणिर्भृगुः । वैशब्देनभृगोर्वरुणपुत्रत्वंप्रसिद्धमित्याचष्टे । पितरंवरुणमुपससार समीपंग तवान् । किंवदन्उपससारेत्यतआह ॥ **अधीहीति** ॥ हेभगवः मतुवसोरुःसंबुद्धौछंदसि । हेभगवन्पूज्य ब्रह्मपरंब्रह्म अधी हिअध्यापयेति णिजर्थस्यांतर्णीतत्वात् । एवंपृष्टोवरुणःतस्मैभृगवेएतत्ब्रह्मप्रोवाच उपदिष्टवान् । तदेवदर्शयति॥ **अन्नमित्या दिना** ॥ अत्रविज्ञानानंदौग्राह्यौ। पूर्वत्रचक्षुःश्रोत्रवाचोग्राह्याः। उक्तार्थेसमाख्यारूपत्वात् । अत्तृत्वादन्नं प्राणंप्रकृष्टचेष्टकत्वात् चष्टइतिचक्षुः श्रवणात्श्रोत्रं मंतृत्वान्मनः वक्तृत्वाद्वाक् विवेचनात्विज्ञानं आनंदरूपत्वादानंदं एतन्नामकंब्रह्मेत्युवाच । वस्तु सिद्धेर्लक्षणाधीनत्वात्तंप्रतिब्रह्मलक्षणमप्युवाच । यथोक्तंसुधायां । वरुणोप्युद्देशलक्षणाभ्यांभृगवेब्रह्मोपदिश्येति । तदेवलक्षण जातंदर्शयति ॥ **यतइत्यादिना** ॥ जीवंतिचेष्टंते यत्प्रयंति प्रलये । अभिस्वेच्छया संविशंति मुक्तौ । तद्ब्रह्मेतिज्ञात्वातद्ब्रह्म

---

उप० ॥ ॐ सहनाववतु । सहनौभुनक्तु । सहवीर्यंकरवावहै । तेजस्विनावधीतमस्तुमाविद्विषावहै ।ॐशांतिश्शांतिश्शांतिः ॥ १॥ ॐ । भृगुर्वै वारुणिः । वरुणंपितरमुपससार। अधीहिभगवोब्रह्मेति । तस्माएतत्प्रोवाच । अन्नंप्राणंचक्षुश्श्रोत्रंमनोवाचमिति । तꣳहोवाच । यतोवाइमानिभूतानिजायंते । येनजातानिजीवंति । यत्प्रयंत्यभिसंविशति । तद्विजिज्ञासस्व। तद्ब्रह्मेति ॥ १ ॥ सतपोतप्यत । सतपस्तप्त्वा । अन्नंब्रह्मेतिव्यजानात् ।

विजिज्ञासस्व मनननिदिध्यासनरूपांजिज्ञासांकुर्वित्यर्थः । नश्रवणमात्रेणकृतीभवान् श्रवणमात्रस्यब्रह्मसाक्षात्कारासाधनत्वात् । साक्षात्कारस्यैवमोक्षहेतुत्वा दतःतत्साधनीभूतांजिज्ञासांकुर्विंतिभावः । एवमुपदिष्टाष्टरूपोभृगुर्युगपत्सर्वस्यसाक्षात्कर्तुमशक्यत्वादादौअन्ननामकभगवत्साक्षात्काराय तपः मनननिदिध्यासनरूपंतपोतप्यत चकार । सःभृगुःतपस्तप्त्वाकृत्वा अन्नं अत्तृत्वादन्ननामकमन्नस्थमनिरुद्धाख्यंभगवद्रूपं ब्रह्मेतिव्यजानात् साक्षात्कृतवान् । कुतोब्रह्मेतिव्यजानादित्यतउक्तंब्रह्मलक्षणयोगित्वादित्यभिप्रेत्यतत्रतल्लक्षणंज्ञातवानित्याह ॥ अन्नाद्ध्येवेत्यादिना ॥ तद्विज्ञाय मनननिदिध्यासनाभ्यांअन्नाख्यंभगवद्रूपंसाक्षात्कृत्य गुरुप्रसादलब्धमपूर्वंतमंधनंतस्मैनिवेदितुं प्राणाख्यरूपांतरसाक्षात्कारायमनननिदिध्यासनेचिकीर्षुर्गुरोरनुज्ञामादातुंचपुनरेववरुणंपितरमुपससार ॥ अधीहीति ॥ अन्नादिरूपाष्टकमपिपुनरधीहिअनुजानीहि । तत्रानुजानीहीतिवक्तव्येयदधीहिभगवोब्रह्मेतिवदति तदहंकारनिरासार्थं । यथोक्तमनुव्याख्याने । दृष्ट्वैकैकंस्वरूपंतुसमस्तोक्तानुदर्शनं । इच्छताज्ञांगुरोःप्राप्यतपसैवापरोक्षितमिति । एवमुपसरणानंतरंपुनर्वरुणोन्नंप्राणंचक्षुःश्रोत्रंमनोवाचमितीत्येवंविज्ञानानंदसहितंअन्नादिरूपाष्टकमपिपुनरादिशश्चेतिग्राह्यं । कुतएवंव्याख्येयमितिचेत् उच्यते । एतदवष्टंभेनैवलिंगाच्चेतिसूत्रेश्रवणाद्यावृत्तेःकर्तव्यतायाःसूत्र

उप०॥अन्नाद्ध्येवखल्विमानिभूतानिजायंते।अन्नेनजातानिजीवंति। अन्नंप्रयंत्यभिसंविशंतीति। तद्विज्ञाय। पुनरेववरुणंपितरमुपससार। अधीहिभगवोब्रह्मेति॥ त९होवाच । तपसाब्रह्मविजिज्ञासस्व । तपोब्रह्मेति ॥ २ ॥ सतपोतप्यत । सतपस्तप्त्वा । प्राणोब्रह्मेतिव्यजानात् । प्राणाद्ध्येवखल्विमानिभूतानिजायंते । प्राणेनजातानिजीवंति । प्राणंप्रयंत्यभिसंविशंतीति । तद्विज्ञाय । पुनरेववरुणंपितरमुपससार । अधीहिभगवोब्रह्मेति ।

कारेणसाधितत्वात् । उक्तंचतत्वप्रकाशिकायां । श्रुतान्नादिरूपविषयएवभृगोःपुनःपुनःप्रश्नात् । तथैववरुणोक्तेश्चेति । अतए वात्रादिशच्चेतिपूर्वटीकाकारैःपूरितमित्यवगंतव्यं । एवंब्रह्मोपदिश्यतंभृगुंप्रतिवरुणउवाच ॥ तपसेत्यादिना ॥ मनननिदि ध्यासनरूपतपसेत्यर्थः । ब्रह्म तपो ज्ञानस्वरूपमितिज्ञात्वाविजिज्ञासस्वेतिसंबंधः । एवमेवोत्तरत्रापियोजनाद्रष्टव्या । प्राणादि शब्दाःप्रद्युम्नादिरूपपराःद्रष्टव्याः । एवंचक्षुर्ब्रह्मेतिव्यजानात् । चक्षुषोह्येवखल्विमानिभूतानिजायंतइत्यादिकं । श्रोत्रंब्रह्मेति व्यजानात् । श्रोत्राद्ध्येवखल्वित्यादिकं । वाचंब्रह्मेतिव्यजानात् । वाचोह्येवखल्वित्यादिकंचग्राह्यं । उक्तंचानुव्याख्याने । त च्चवाधूलशाखायामष्टरूपमुदाहृतं । विज्ञानानंदसहितंपृथक्सृष्ट्यादिलक्षणैः । आवापोद्वापतःशाखायतआहुःपरंपदमिति ॥ १-६ ॥ उपसंहरति ॥ सैषेति ॥ सैषा भार्गवी भृगुणानुष्ठिता । वारुणी वरुणोपदिष्टा विद्या । परमेव्योमन्व्योम्नि । व्योमे

---

तꣳहोवाच । तपसाब्रह्मविजिज्ञासस्व । तपोब्रह्मेति ॥३॥ सतपोतप्यत । सतपस्तप्त्वा । मनोब्रह्मेतिव्यजानात् । मनसोह्येवखल्विमानिभूतानिजायंते । मनसाजातानिजीवंति । मनः प्रयंत्यभिसंविशंतीति । तद्विज्ञाय । पुनरेववरुणंपितरमुपससार । अधीहिभगवोब्रह्मेति । तꣳ होवाच । तपसाब्रह्मविजिज्ञासस्व । तपोब्रह्मेति ॥४॥ सतपोतप्यत । सतपस्तप्त्वा । विज्ञानंब्रह्मेतिव्यजानात् । विज्ञानाद्ध्येवखल्विमानिभूतानिजायंते । विज्ञानेनजातानि जीवंति । विज्ञानंप्रयंत्यभिसंविशंतीति । तद्विज्ञाय । पुनरेववरुणंपितरमुपससार । अधीहिभगवोब्रह्मेति । तꣳहोवाच । तपसाब्रह्मविजिज्ञासस्व । तपोब्रह्मेति ॥५॥ सतपोतप्यत । सतपस्तप्त्वा । आनंदोब्रह्मेतिव्यजानात् । आनंदाद्ध्येवखल्विमानिभूतानिजायंते । आनंदेनजातानिजीवंति । आनंदंप्रयंत्यभिसंविशंतीति ॥ ६ ॥ सैषाभार्गवीवारुणीविद्या । परमेव्योमन्प्रतिष्ठिता ।

तिव्याप्तशब्दःस्यादितिवचनात् व्याप्तेपरमेव्योम्निपरमात्मनि तद्विषयेप्रतिष्ठिता। तत्प्रतिपादिकेत्यर्थः। एवंवरुणोक्तप्रकारेणभृग्वपरोक्षीकृतान्नादिरूपाष्टकज्ञानिनःफलमाह ॥ यएवंवेदेति ॥ एवं भृगुणाज्ञातमन्नादिबहुरूपिणंविष्णुंवेद सःमुक्तोभूत्वातस्मिन्विष्णावेवप्रतितिष्ठतीत्यर्थः । अन्नवा न्मुक्तावन्ननामकभगवद्वान्भवति। तेनसर्वदागुप्तोभवतीत्यर्थः । अन्नादः अन्ननामकभगवंतमत्ति तमुपजीवतीत्यन्नादोभवति । सदातदुपजीवकत्वानुसंधानवान्भवतीत्यर्थः। प्रजया प्रकृष्टत्वेनजननान्नित्योदिततयास्थितत्वात्प्रजेतिज्ञानं तया। पशुभिः पांतिशंसाधनंचेतिपशवोवेदास्तैः। ब्रह्मवर्चसेन ब्रह्मणोविष्णोः वरुणादेवसम्यकूचायितंअभिवृद्धंयत्स्वरूपंतेजस्तद्ब्रह्मवर्चसं तेनमहान्भवति । संसृतावल्पंअल्पतेजश्चजीवरूपंभगवान्मुक्तौमहन्महातेजश्चकरोतीति हि। अल्पतेजस्तथैवाल्पंजीवरूपंहिसंसृतौ। तदेवसुमहत्तेजःकरोतीशोमहत्तदेतिप्रमाणप्रसिद्धं। कीर्त्याचमहान्भवति । लौकिकफलेप्सूनांएतज्ज्ञानात्प्रसिद्धप्रजादिकमपिफलंयथायोग्यंभवतीत्यपिव्याख्येयं ॥ ७ ॥ प्रकृतान्ननामकस्यभगवतोबह्वीरुपास्तीराह ॥ अन्नंननिंद्यादित्यादिना ॥ यदिमोक्षसुखेस्पृहा तर्ह्यन्नं अन्ननामकंभगवंतं ननिंद्यात् । दोषित्वनिर्गुणत्वाल्पगुणत्वादिनानिंदांनकुर्यात्। तन्निंदनेचनरकादिदुःखमितिभावः। तद्व्रतं अन्नाख्यभगवदनिंदनंव्रतत्वेनभाव्यमित्यर्थः ॥ प्राणोवाइत्यादिनोपास्त्यंतरमुच्यते। शरीरस्थितप्राणेस्थितः प्रकृष्टानंदबलत्वेनप्राणनामाविष्णु रन्नंभोग्यः । यस्यशरीरं शीर्यतेदेह

उप० । यएवंवेदप्रतितिष्ठति । अन्नवानन्नादोभवति । महान्भवतिप्रजयापशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ॥७॥ अन्नंननिंद्यात्। तद्व्रतं। प्राणोवाअन्नं। शरीरमन्नादं। प्राणेशरीरंप्रतिष्ठितं। शरीरेप्राणःप्रतिष्ठितः।

नाशेननश्यतीतिशरोजीवस्तंईरयतिप्रेरयतीतिशरीरं। तच्छब्दवाच्यरूपं। अन्नादंभोक्तृ । एवंशरीरमन्नंप्राणोवाअन्नादइत्यपिद्रष्टव्यं। उभयोःप्राणशरीरनामकरूपयोरुक्तमन्नत्वमन्नादत्वंचस्पष्टमाह॥प्राणइत्यादिना॥ प्राणेतदाख्येरूपेभोग्येसति शरीरं तन्नामकंरूपंभोक्तृतयाप्रतिष्ठितं । शरीरेतन्नामकेरूपेभोग्येसति प्राणस्तन्नामाविष्णुःभोक्तृतयाप्रतिष्ठितः। उपसंहरति ॥ तदेतदिति ॥ तत्तस्मात्तदुक्तरीत्याप्राणशरीरयोरुभयोरप्यन्नत्वादेस्तदन्नमन्नेप्रतिष्ठितमितिजानीयादित्यर्थः। एवंवेत्तुःफलमाह ॥ सय एतदिति ॥ प्रतितिष्ठतीत्यादिकंपूर्वोक्तवद्योजनीयं ॥ ८ ॥ विद्यांतरमाह ॥ अन्नमिति ॥ नपरिचक्षीतननिराकुर्यात् । निराकरणंचायोग्येषूपदेशः । तन्नकुर्यादित्यर्थः। इत्थमव्याख्यानेननिंद्यादित्येननपुनरुक्त्यापत्तेः । तद्व्रतं अपरिचक्षणंव्रतमित्यर्थः ॥ आपइतिविद्यांतरं ॥ आपालनादापः । ज्योतिःप्रकाशरूपत्वात् । एवमेवज्योतिरन्नंआपोवाअन्नादाइत्यपिद्रष्टव्यं । उभयोरब्ज्योतिर्नामकरूपयोरुक्तमन्नत्वमन्नादत्वंचस्पष्टमाह ॥ अप्स्विति ॥ भोग्यभूतासुसतीषु ज्योतिः प्रतिष्ठितं भोक्तृतया । ज्योतिषिभोग्येसति आपः भोक्तृतया । उपसंहरति ॥ तदेतदिति ॥ तत्तस्मादुक्तरीत्याअप्ज्योतिषोरुभयोरन्नत्वादित्यर्थः । सय

---

उप ॥ तदेतदन्नमन्नेप्रतिष्ठितं सयएतदन्नमन्नेप्रतिष्ठितंवेदप्रतितिष्ठति । अन्नवानन्नादोभवति । महान्भवतिप्रजयापशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ॥ ८ ॥ अन्नंनपरिचक्षीत । तद्व्रतं । आपोवाअन्नं । ज्योतिरन्नादं । अप्सुज्योति प्रतिष्ठितं । ज्योतिष्यापः प्रतिष्ठिता । तदेतदन्नमन्नेप्रतिष्ठितं । सयएतदन्नमन्नेप्रतिष्ठितंवेदप्रतितिष्ठति । अन्नवानन्नादोभवति । महान्भवतिप्रजयापशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ॥ ९ ॥

रामन्नं अन्ननामकभगवद्विषयिणींविद्यांप्राप्नुयादित्यर्थः । अस्मा अस्मैउपासकाय । अन्नं भगवद्रूपं । अराधि सिद्धं । अपरोक्षतोज्ञातंभवतीतिविद्वांसआचक्षतेप्राहुरित्यर्थः । अपरोक्षज्ञानेविशेषमाह ॥ एतद्वैमुखतइत्यादिना ॥ यदीतिशेषः । एतदन्नं भगवत्स्वरूपं यदिमुखतःउपक्रमात् सप्तम्यर्थेतसिः । पूर्ववयसि । येनसात्विकप्रकृतिनापुरुषेणसत्संगत्याराद्धंसिद्धंज्ञातं । श्रवणायप्रारभ्यपश्चात्त्यक्तमितियावत् । अस्मा अस्मै । चतुर्थीतृतीयार्थे । अनेनअधिकारिणा अन्नंभगवद्रूपं अनेकजन्मभिःसाधनसंपूर्त्यनंतरं अपरोक्षज्ञानकाले मुखतःअग्रतः उपक्रमात् प्रथमार्थेतसिः मुखं राध्यतेआप्यते । अपरोक्षीक्रियतइत्यर्थः । इतरांगंविद्युद्वत्तेजःपुंजमेवपश्यतिनस्पष्टमितिभावः । अपरोक्षज्ञानानुसारेणमुक्तावपितथैवपश्यतीतिद्रष्टव्यं । एतदन्नंयदिमध्यतोमध्येवयसिराद्धंसिद्धंज्ञातं । श्रवणायप्रारभ्यपश्चात्त्यक्तमितियावत् । तर्हिअस्माअस्मै अनेन अपरोक्षज्ञानकाले अन्नंमध्यतः राध्यते मध्यतोपरोक्षीक्रियते । मध्यमेवांगंस्पष्टंपश्यति । इतरदंगंविद्युद्वत्तेजःपुंजमेवपश्यति । नस्पष्टमितिभावः । अपरोक्षज्ञानानुसारेणमुक्तावप्येवमेवपश्यतीतिज्ञातव्यं । एतदन्नंयदिअंततःवार्धके राद्धं श्रवणायप्रारब्धमितियावत् । तर्हिअस्माअस्मै अनेनाधिकारिणा अपरोक्षज्ञानकालेअन्नंराध्यते । कथंराध्यते । अंततः अंते पादद्वयमितियावत् । तदेवराध्यतेअपरोक्षीक्रियते । पादावेवस्पष्टंपश्यति । इतरांगंतुविद्युद्वत्तेजःपुंजमेवेतिभावः । अपरोक्षज्ञानानुसारेणमुक्तावप्येवमेवपश्यतीतिज्ञातव्यं । अत्रमुखतोस्माअन्न१राध्यते मध्यतोस्माअन्न१राध्यते । अंततोस्माअन्न१राध्यतेइत्येवसर्ववैदिकसंमतःपाठः । सर्वपुस्तक

उप ॥ एतद्वैमुखतोन्न१राद्धं । मुखतोस्माअन्न१राध्यते । एतद्वैमध्यतोन्न१राद्धं । मध्यतोस्माअन्न१राध्यते ।

स्थः । तस्माअरंगमामवः । तस्माएतत्प्रोवाचेत्यादाविवअस्मैअन्नमितिपदच्छेदसंभवात् । अस्मान्नमितिपाठेकथमित्थंपदच्छेदोभविष्यतीतिविचार्यं । योमुखमारभ्यपादपर्यंतंसर्वावयवापरोक्षज्ञानकामःस्यादितिशेषः । सएवपूर्ववयःसमारभ्यैववार्धकपर्यंतंवेदविद्यात् श्रवणादिकुर्यादित्यर्थः । अतएवभाष्येबोद्धव्यमितिविधिपरतव्यप्रत्ययप्रयोगः ॥ ११ ॥ भगवदुपासनांतराण्याह ॥ **क्षेमइतिवाचीत्यादिना** ॥ वाचि वागिंद्रियेस्थितोहरिः क्षेमकृत्त्वात्क्षेमनामेत्युपास्यः । प्राणापानयोर्योगक्षेमइत्युपास्यः । तत्रप्राणेस्थितः सर्वकामनियोजनाद्योगनामेत्युपास्यः । अपानेस्थितस्तुक्षेमकृत्त्वात्क्षेमनामेत्युपास्यइतिविवेकः । हस्तयोःस्थितोजनार्दनः कर्मकृत्त्वात्कर्मनामेत्युपास्यः । पादयोःस्थितःपुरुषोत्तमो गतिर्ज्ञानंमोक्षोवा तद्दातृत्वात्गतिनामेत्युपास्यः । पायौस्थितोहरिर्विसर्गकृत्त्वाद्विमुक्तिनामेत्युपास्यः । इतिमानुषीः मनुष्यदेहसंबंधिवागादींद्रियस्थितभगवत्संबंधिन्यः । आध्यात्मिक्यइतियावत् । समाज्ञाः उपासनाउक्ताः । अथदैवीः अधिदैवगतभगवत्संबधिन्यःसमाज्ञाउपास्तयःकथ्यंतइत्यर्थः । ताएवाह ॥ **तृप्तिरितीत्यादिना** ॥ वृष्टौ तदभिमानिनिपर्जन्ये । तन्नामकेआदित्येस्थितोजनार्दनः तृप्तिदत्वात्तृप्तिनामेत्युपास्यः । विद्युतिवायौस्थितोजनार्दनः बलप्रदत्वाद्बलमित्युपास्यः । पशुषुपशुसमुदायाभिमानिनिदक्षेस्थितोहरि र्यशःप्रदत्वाद्यशोनामेत्युपा

---

उप ॥ एतद्वाअंततोन्न९ राद्धं । अंततोस्माअन्न९ राध्यते । यएवंवेद ॥ ११ ॥ क्षेमइतिवाचि । योगक्षेमइतिप्राणापानयोः । कर्मेतिहस्तयोः । गतिरितिपादयोः । विमुक्तिरितिपायौ । इतिमानुषीस्समाज्ञाः । अथदैवीः । तृप्तिरितिवृष्टौ । बलमितिविद्युति । यशइतिपशुषु । ज्योतिरितिनक्षत्रेषु । प्रजातिरमृतमानंदइत्युपस्थे । सर्वमित्याकाशे ॥ १२ ॥

स्यः । नक्षत्रेषुअश्विन्यादिषुस्थितोहरिः ज्योतिःशब्दवाच्यप्रकाशप्रदातृत्वात्ज्योतिर्नामेत्युपास्यः । उपस्थे गुह्येंद्रियाभिमानि शिवेस्थितोहरिः पुत्रदातृत्वात्प्रजापतिनामकः अमृतं संतति स्तथाचपौत्रादिरूपसंतानपरंपरादातृत्वादमृतं अमृतनामकः । आनंददातृत्वादानंदनामकइत्युपासीत । आकाशेप्रकृतौस्थितंपरब्रह्म सत्ताप्रतीत्यादिसर्वप्रदत्वात्सर्वनामकमित्युपासीत ॥ १२ ॥ आकाशशब्दवाच्यप्रकृतिस्थपरब्रह्मणएवोपास्त्यंतराण्याह ॥ **तदिति** ॥ तत् आकाशस्थंपरंब्रह्म तत्तत्पदेषुदेवादिस्थापकत्वेन प्रतिष्ठाशब्दवाच्यमित्युपासीत । एवमुपासकस्यफलमाह ॥ **प्रतिष्ठावानिति** ॥ एवमुपासकोलोकःस्वयमपिप्रतिष्ठावान् स्वावरस्थापकत्वगुणवान्भवतीत्यर्थः । तदाकाशस्थंपरंब्रह्म महत्त्वान्महइत्युपासीत । सउपासकोमहान्भवति । तदाकाशस्थंपरंब्रह्म मान्यत्वान्मनइत्युपासीत । सउपासकोमानवान्सन्मानवान्भवति । सर्वैर्मान्योभवतीत्यर्थः । तत्आकाशस्थंपरब्रह्म णम प्रह्वत्वेशब्देचेतिधातोः नम्यत्वात्शब्द्यत्वात्सर्वदेवैःस्तुत्यत्वादितियावत् । नमइत्युपासीत अस्मैउपासकाय । उपासकेनेतियावत् । कामाःकाम्याःकामितविषयाः । नम्यंते धातूनामनेकार्थत्वात्प्राप्यंते । यद्वाअस्मैकामाःनम्यंते नम्राभवंति प्राप्ताःभवंतीतियावत् । तदाकाशस्थंभगवद्रूपं पूर्णगुणत्वाद्ब्रह्मेत्युपासीत । सउपासकोब्रह्मवान्भवति तेनसदागुप्तोभवतीत्यर्थः । तदाकाशस्थंपरंब्रह्मब्रह्मणोविरिंचस्यपरिमरोमारकइत्युपासीत । तमेनमुपासकं परि परितःसमंतात्स्थिताद्विषंतः प्रतीपबुद्धिंकुर्वंतो

उप ॥ तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान्भवति । तन्महइत्युपासीत । महान्भवति । तन्मनइत्युपासीत । मानवान्भवति । तन्नमइत्युपासीत । नम्यंतेस्मैकामाः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान्भवति । तद्ब्रह्मणःपरिमरइत्युपासीत । पर्येणंम्रियंतेद्विषंतस्सपत्नाः । परियेऽप्रियाभ्रातृव्या. ॥ १३ ॥

बाह्याःसपत्नावैरिणोम्रियंते । तथाएनं परि परितः स्थिताःअप्रिया दुःखाद्यप्रियकारिणो भ्रातृव्याःकामक्रोधाद्यांतरशत्रव स्ते पिम्रियंतेनश्यंतीत्यर्थः ॥ १३ ॥ एवमध्यात्मंवागादौ अधिदैवंवृष्ट्यादौचस्थितःपरमात्मा परस्परंभिन्नोनमंतव्यइत्याह ॥ **सयश्चायमिति** ॥ सयःपुरुषे अध्यात्मंपुरुषस्थितवागादौविद्यमानः अयं यश्चासावधिदैवंवृष्टिशब्दोक्तादित्ये तदुपलक्षितविद्युदादिषुस्थितः सएकः परस्परंमूलरूपेणचात्यंताभिन्नएवेत्यर्थः । एवमन्नमयादिरूपाष्टकविषयकस्फुटापरोक्षज्ञानवांश्चतुर्मुखएव नान्योतस्तद्धेतुस्तस्यैवतत्प्रसादायतंमहिमानमाह ॥ **सयएवंविदित्यादिना** ॥ यएवंपूर्वोक्तप्रकारेणान्नमयादिरूपाष्टकवित् । मुख्यामुख्ययोर्मुख्येसंप्रत्ययइतिन्यायेनातिस्फुटंतत्साक्षात्कारवान् सब्रह्मा अस्माल्लोका च्चरमत्वेनप्रसिद्धाद्देहात्प्रेत्यमुक्तःसन्निति यावत् । एतमन्नमयमात्मानंअनिरुद्धं । प्राणमयमात्मानंप्रद्युम्नं । मनोमयमात्मानंसंकर्षणं । विज्ञानमयमात्मानंवासुदेवं । आनंदमयमात्मानंनारायणं । उपलक्षणमेतत् । चक्षुर्मयमात्मानं श्रोत्रमयमात्मानं वाङ्मयमात्मानं उपसंक्रम्य तत्समीपंप्राप्य कामान्नी अन्नाद्युपलक्षितकामितसमस्तभोगवान् कामरूपी कामितसमस्तरूपीभूत्वा इमान्प्रमाणप्रसिद्धान् लोकान् लुकृप्रकाशइतिधातोःप्रकाशरूपत्वान्मुक्ताःलोकशब्देनोच्यंते । यथोक्तमनुव्याख्याने । लोकाभिधाश्चापियतोहिमुक्ताःप्रकाशरूपाःसत

उपनि ॥ सयश्चायंपुरुषे । यश्चासावादित्ये । सएकः । सयएवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रम्य । एतंप्राणमयमात्मानमुपसंक्रम्य । एतंमनोमयमात्मानमुपसंक्रम्य । एतंविज्ञानमयमात्मानमुपसंक्रम्य । एतमानंदमयमात्मानमुपसंक्रम्य । इमाँल्लोकान्कामान्नी कामरूप्यनुसंचरन् ।

तंचसर्वइति । तान् अनु तद्योग्यतानुसारेण सम्यक्चरन् णिजंतमेतत् । चारयन् चरगतिभक्षणयोः । गमयन्नियामयन्निति यावत् । यथोक्तमनुव्याख्याने । मुक्तस्वकीयावरयंतृतास्तिमुक्तावपिब्रह्मपुरःसराणामिति । यद्वा इमान् सयदिपितृलोककामोभवतीत्यादिप्रमाणप्रमितान्लोकान्संचरन् तत्रसंचारयन्नित्यर्थः । इमान्लोकान्प्रसिद्धान्भूरादीन्अनुसंचरन् अप्रत्यक्षतयातत्रसंचारंकुर्वन्सन्नित्यप्यर्थमाहुः । एतत्वक्ष्यमाणंसामगायन्नास्ते । तदेवसामदर्शयति ॥ हावुइत्यादिना ॥ हावुइत्यादित्रिरुक्तिः सामत्वात्सुखातिशयास्वादनाद्वा । उत्तरत्रत्रिरुक्तिस्तु सामत्वाद्वा तात्पर्यातिशयद्योतनायवेतिद्रष्टव्यं । अहमन्नंभोग्यः अद्यः मुक्तस्वावरान्प्रत्युपजीव्यत्वादितिभावः । अहमन्नादः यथेष्टमन्नभोक्ता यथेष्टभोगभोक्तेत्यर्थः । अहं श्लोककृत्शिष्येषु भगवदुपदेशेनतत्कीर्तिविस्तारकर्तेत्यर्थः । यद्वा एतादृशमहिमोपेतोहंहरेःपुत्रइतिहरेःकीर्तिकर्तेत्यर्थः। तथाहिलोकेपुत्रमहिम्नापितुः कीर्तिर्दृष्टेति ॥ १४ ॥ अहंऋतस्य ऋतंयथार्थविज्ञानमितिवचनात्यथार्थविज्ञानरूपस्य यद्वाऋगताविति धातोस्तुपूर्वावगतवत्सदा । स्थितेर्ब्रह्मर्तमित्युक्तमितिवचनात्पूर्वावगतवत्सदास्थितस्येत्यर्थः । विष्णोःप्रथमजाः प्रथमजःपुत्रइत्यर्थः । किंमनुष्येभ्यः प्रथमजःपुत्रइत्याशंक्यनेत्याह ॥ पूर्वंदेवेभ्यइति ॥ देवेभ्यःपूर्वः पूर्वजइत्यर्थः । पूर्वभावव्यपेक्षयेदमितिज्ञातव्यं । अहं अमृतस्य समुदायापेक्षमेकवचनं । अमृतानांमुक्तानां नाभाइनाभिराश्रयइत्यर्थः । प्रतीकालंबनप्राप्यत्वरूपंस्वमहिमानमाह ॥

उप ॥ एतत्सामगायन्नास्ते । हा३वुहा३वुहा३वु । अहमन्नमहमन्नमहमन्नं । अहमन्नादो ३ हमन्नादो ३ हमन्नादः । अहं श्लोककृदहं श्लोककृदहं श्लोककृत् ॥ १४ ॥ अहमस्मिप्रथमजाऋता३स्य । पूर्वंदेवेभ्योऽमृतस्यना ३ भाइ ।

**योभाइति** ॥ यः मा ददाति सः इत् एव माः वा इतिपदच्छेदः। यःअधिकारीप्रतीकालंबनो माःज्ञानानि विष्णुतत्त्वविषयकाणिशिष्येभ्योददाति उपदिशति । सतदादिसाधनजनितापरोक्षज्ञानानंतरं भुक्तप्रारब्धकर्माचरमदेहादुत्क्रांतःसन् अर्चिरादिपथा इत्एव इत्थमेव अतिनिश्चयेनेतियावत् । मामां वाः वातेर्गत्यर्थत्वात्यातीत्यर्थः । यथोक्तंकार्यंबादरिरस्यगत्युपपत्तेरिति । पूर्वभावव्यपेक्षयेदं । अहमन्नं । विष्णुनाहमद्यःसंहार्यइत्यर्थः । ब्रह्मचर्मशिरःपदीत्यादिवचनात् । इदमपिपूर्वभावव्यपेक्षयेतिज्ञातव्यं । यद्वाअहमन्नं भोग्यः । तथाच विष्णुकर्तृकभोगविषयइत्यर्थः तथाहि भगवान्स्वेच्छयागृहीतस्त्रीरूपवतामुक्तब्रह्मणासहमिथुनीभावेनक्रीडतइतिछांदोग्योपनिषद्भाष्येऽभिहितं । अतएवकामरूपीतिमुक्तब्रह्मणःकामरूपत्वमुक्तमित्यवगंतव्यं । अहमन्नमदंतं प्रसिद्धान्नोपजीविनंजीवजातं आद्मि आअद्मि । अद भक्षणे । सम्यक्भक्षयामि संहरामीत्यर्थः । इदमपिपूर्वभावव्यपेक्षयेतिज्ञातव्यं । अहमानंदादिगुणैर्विश्वंभुवनंसरस्वत्यादिजीवजातं अभ्यभवां अभिप्रति अभवां स्वाम्यभवं वरोभवं । तदुत्तमोस्मीत्यर्थः । एतावतानममस्वातंत्र्यंमंतव्यमित्यभिप्रेत्याह ॥ **सुवर्णज्योतीरित्यादिना** ॥ सुष्टुपरमानंदरूपत्वात्प्रकाशरूपत्वाच्चसुवर्णज्योतिर्विष्णुः ईःईरकः प्रेरकोयस्यमम सोहंसुवर्णज्योतीरित्यर्थः । योहं एवं अन्नमयादिरूपिणंभगवंतंसृष्ट्यादिलक्षणयुक्ततया सुवर्णज्योतीरित्युक्तप्रकारेणमत्प्रेरकत्वेनवा वेद लकारव्यत्ययः । वेद्मि । योहमेवंविदभवमितियावत् । तस्यैवंवेत्तुर्ममाधवः

---

उप ॥ योमाददातिसइदेवमा ३ वाः । अहमन्नमन्नमदंतमाद्मि । अहंविश्वंभुवनमभ्यभवां । सुवर्णज्योतीः । यएवंवेद । इत्युपनिषत् ॥ सहनाववतु । सहनौभुनक्तु । सहवीर्यंकरवावहै । तेजस्विनावधीतमस्तुमाविद्विषावहै ॥ ॐशांतिश्शांतिश्शांतिः ॥ १५ ॥ इतितृतीयवल्लीसंपूर्णा ॥ ३ ॥

पतिरितिशेषः । अतोममभगवत्प्रेरितत्वेनस्वातंत्र्याभावात्तदनुग्रहेणोक्तं सरस्वत्यादिविश्वोत्तमत्वमुपपन्नमितिभावः । इतिसामगायन्नास्तइतिपूर्वेणसंबंधः । इतीत्येत दुपनिषदित्यनेनापिसंबध्यते । तथाच एवंभृगुंप्रत्युपदिश्योपसंहरतिवरुणः ॥ इत्युपनिषदिति ॥ एवंपूर्वोक्तप्रकारेणउपनिषत् त्वद्योग्यरहस्यभूताचब्रह्मविद्यात्वांप्रतिमयोपदिष्टेतिशेषः ॥ ७ ॥ एवंसमापितभाष्योभगवानाचार्योयद्गुणविशिष्टतयाभगवंतमेतदुपनिषदर्थत्वेनप्रतिपादितवान् यस्मिंश्चात्मनोतिशयेनप्रीतिस्ताद्दशभगवद्वंदनरूपमेवमंगलमंतेष्याचरति ॥ यस्येति ॥ अतएवपरमेशं प्रेयसःसकाशात् मेममप्रेयांसं अतिशयेनप्रियमित्यर्थः ॥ अथस्वभाषितभाष्यस्याप्तिमूलकत्वसमर्थनायश्रुतिप्रसिद्धंस्वस्यपरमाप्तत्वंदर्शयन्नाह ॥ यस्यत्रीणीति ॥ यस्यवायोः । वेदस्य बलित्थेत्यादिवचने। दिव्यानि क्रीडादिगुणयुतानि त्रीणिरूपाणिउदितानि। तस्ययत्तृतीयकंवपुः तेनेदंभाष्यं प्रभौ प्रभुविषयतयाकृतंहीत्यन्वयः । कीद्दशंचास्यमूलरूपं कानिचत्रीणिरूपाणि कीद्दशानिचेतितत्राह ॥ अलमिति ॥ तस्यवायोःमूलरूपं अलंसम्यक् बट्बलात्मकं दर्शतंज्ञानरूपं भर्गःभरणगमनकर्तृ महत्श्रेष्ठं । तदित्थमेव रूपत्रयावतारायभगवतानिहितंप्रेरितंअवतीर्णंच । तत्रप्रथमकंहनुमदाख्यंवपुः रामवचोनयं रामवचांसिसीतांप्रतिनीतवत् । रामवचसियोनयोन्यायआज्ञारूपस्तद्युक्तंवा । रामविषयकवचांसि मूलरामायणरूपाणिशिष्येषुनीतवद्वा । द्वितीयं भीमनामकं पृक्षः कुरुपृतनाक्षयकारि । तृतीयंरूपं आनंदरू

---

भाष्यं ॥ यस्योच्चोथसमोवाकश्चिन्नैवास्त्यनंतसच्छक्तेः । तंवंदेपरमेशंप्रेयांसंप्रेयसश्चमेविष्णुं ॥ यस्यत्रीण्युदितानिवेदवचनेरूपाणिदिव्यान्यलं बट्तद्दर्शतमित्थमेवनिहितंदेवस्यभर्गोमहत् । वायोरामवचोनयंप्रथमकंपृक्षोद्वितीयंवपुर्मध्वोयत्तुतृतीयकंकृतमिदंभाष्यंहितेनप्रभौ ॥

पस्यहरेःप्रतिपादकशास्त्रनिर्मातृ मध्वाभिधमिति। अतःपरमाप्तप्रणीतत्वादिदंभाष्यंसकलसुजनैरादरेणांगीकार्यमितिभावः ॥छ॥ ननुबलित्थेत्यादिवचनेवायोःत्रीणिरूपाण्युदितानीत्यसत् । तस्यसूक्तस्यत्रेताग्निपरत्वादित्यतस्तत्सूक्तंवायुरूपत्रयपरतयाप्रमाणेनव्याकुर्वन् यदीमुपह्वरतेसाधतेमतिरित्युक्तमतिशब्दंतावद्व्याचष्टे ॥ हनशब्दइति ॥ [ हनहिंसागत्योर्भावेअप्रत्ययेसतिनिष्पन्नोहनशब्दोज्ञानवाची । गत्यर्थस्यावगत्यर्थत्वादितिभावः । अत्रहन्हिंसागत्योरित्येवधातुः । नतुहनहिंसागत्योरिति । तथात्वेहनधातुर्ज्ञानवाचीतिवक्तव्यं । नतुहनशब्दइति । प्रत्ययानिष्पन्नेकेवलधातौशब्दव्यवहाराभावेनहनशब्दोज्ञानवाचीत्यस्यायोगात् । इदमुपलक्षणं । उशब्दउत्कृष्टत्ववाची । उत्कृष्टत्वमुकारार्थइतिबृहद्भाष्योक्तेः । ज्ञानस्योत्कृष्टत्वंचईशादन्यत्रालोचनेसर्वविषयकत्वादीत्यपिद्रष्टव्यं । तथाचहनउइत्यत्रनिर्वचनत्वान्नकारस्थाकारलोपेहनुइतिजातेतदस्यास्तीत्यर्थेतदस्यास्मिन्निति सूत्रेणमतुप्प्रत्यये उपूइत्यस्यलोपेहनुमदितिप्रातिपदिकनिष्पत्तौहनुमानितिभवति । तथाचहनुमान् ईशादन्यत्रालोचनेसर्वविषयकत्वेनोत्कृष्टज्ञानवान् हनुमान्मतिशब्दितःमतिशब्देनोच्यते । अथवागत्यर्थाद्धनधातोस्ताच्छील्यार्थेउन्प्रत्ययः । ताच्छील्यार्थादुनस्तथेत्यनुव्याख्यानोक्तेः । तथाचन्इत्यस्यलोपेहनुइतिजातेतदस्यास्तीत्यर्थेउक्तसूत्रेणमतुप्प्रत्ययेसतिहनुमानितिभवति । तथाचहनुमान्अनादिकालाभिव्यक्तवैदिकेश्वरज्ञानवत्त्वेनज्ञानस्वभाववानित्यर्थः । सचमतिशब्दितःमतिशब्देनोच्यतइत्यर्थः । ननुतद्युक्तरीत्या ] हनहिंसागत्योरितिधातोर्गत्यर्थस्यचावगत्यर्थतया

भाष्यं ॥ हनशब्दोज्ञानवाचीहनुमान्मतिशब्दितः ।

हनुशब्दस्यज्ञानवाचित्वेनमतिशब्दसमानार्थत्वात् हनुमान्मतिशब्देनोच्यतइत्यर्थः । हनुशब्दस्यज्ञानवाचित्वेहनुमान्मतिमच्छब्दवाच्यःस्यान्नतुमतिशब्दितइतिचेन्न । ज्ञानवतोज्ञानरूपताप्रकटनायमतिशब्दप्रयोगात् । ऋतस्यधेनाअनयंतसस्रुतइत्येतद्व्याचष्टे ॥ **रामस्येति** ॥ ऋतस्येत्यस्यार्थःस्वृतरूपस्येति । सुष्ठुसर्वदासर्वत्रचसत्यरूपस्य । यद्वासुष्ठुसम्यक् पूर्वावगतवत्सदास्थितस्येत्यर्थः । यथोक्तं । ऋगताविति धातोस्तुपूर्वावगतवत्सदा । स्थितेर्ब्रह्मर्तमिति । धेनाइत्यस्यार्थोवाचइति । अनयंत सीतांप्रतीतिशेषः । रामस्यवाचो रामप्रतिपादकमूलरामायणरूपाः । तेनहनुमताशिष्यान्प्रतिअनयंतेतिवा । एवंयदीमुपह्वरतेइत्यर्धर्चस्यहनुमदाख्यप्रथमावतारप्रतिपादकत्वमुक्त्वा इदानींपृक्षोवपुरित्यस्यभीमाख्यद्वितीयावतारप्रतिपादकत्वसिद्ध्यर्थं आशयेद्वितीयमासप्तशिवासुमातृष्वित्येतत् भीमशब्दार्थप्रतिपादकमितिभावेनतावद्भीमशब्दार्थमाह ॥ **भृतमइति** ॥ भृताः पूर्णाः माः प्रमाणानियस्मिन्नसौतथोक्तः । अस्त्वेवंभीमशब्दार्थः किंततइत्यतोमातृष्वित्युक्तमातृशब्दार्थंतावदाह ॥ **वाचइति** ॥ माःप्रमाणभूतावाचः । मापकत्वान्मातरः स्मृताइत्यर्थः । सप्तशिवास्वित्युक्तसप्तशिवाशब्दार्थमाह ॥ **ऋगाद्याइति** ॥ ऋगाद्याश्चत्वारः । अस्त्वेवंसप्तशिवाशब्दार्थः तथापिकिमित्यतआह ॥ **तत्रेति** ॥ यतोभृतमोभीमइत्युक्तस्ततोभीमशब्दसमानार्थत्वात्तत्रोक्तासुसप्तशिवासुमातृषुशयोनिष्ठा अतोभीमस्स्मृतइत्यर्थः । तृतीयमस्येत्यादेरानंदतीर्थाख्यतृतीयावतारप्रतिपादकत्वसिद्ध्यर्थंप्रदि

---

भाष्यं ॥ रामस्यस्वृतरूपस्यवाचस्तेनानयंतहि । भृतमोभीमइत्युक्तोवाचोमामातरःस्मृताः । ऋगाद्याइतिहासश्चपुराणंपंचरात्रकं । प्रोक्तास्सप्तशिवास्तत्रशयोभीमस्ततःस्मृतः ।

वोमध्वआधवइत्युक्तमध्वशब्दस्य आनंदतीर्थशब्दसमानार्थत्वमाह ॥ मध्वित्यानंदइति ॥ मधुद्यौरस्तुनःपितेतिप्रयोगात् । मधुआनंदकरं वातेरवगत्यर्थत्वात्घञर्थेकविधानात् इतिकरणेकप्रत्ययेकित्वाद्धात्वाकारलोपेनिष्पन्नस्यवशब्दस्यशास्त्रापरपर्यायतीर्थवाचित्वात्तीर्थशास्त्रमस्येतिमध्वइत्यर्थः । स्वरित्यत्रैवधकारस्थोकारलोपोद्रष्टव्यः । अन्यथामधुवइतिस्यात् ॥ आनंदतीर्थःस्यादिति ॥ आनंदकरतीर्थयस्यासावानंदतीर्थइत्यर्थः । तथाचमध्वानंदतीर्थशब्दौसमानार्थावेवेतिभावः । तृतीयमस्येत्यत्रवपुरित्येतदनुवर्ततइतिभावेनोक्तं तृतीयामारुतीतनुरिति । तृतीयामारुतीतनुःमध्वआनंदतीर्थः स्यादितिसंबंधः । तात्पर्यद्योतनायतज्ज्ञानफलमाह ॥ इतीति ॥ यदीमुपह्वरतेसाधतेमतिरित्यस्यार्थमाह ॥ साधकइति ॥ साधतइत्यस्यार्थोयं । इदंकार्यकुर्वित्यादिरूपाणांरामवाक्यानां । उपह्वरतइत्यस्यार्थः तत्समीपगतइति । मतिशब्दार्थोहनुमानिति । पृक्षोवपुःपितुमानित्येतद्भीमज्ञापकमितिभावेनव्याष्टे ॥ भीमास्त्विति ॥ भीमस्तुद्वितीयोज्ञेयः ॥ बहुभुक्पितोरिति ॥ पितुरित्यन्नसंज्ञा । अन्नंवैपितुरितिश्रुतेः । पितोरन्नस्यबहुभुक् बुद्ध्याविवेकेनबहोरन्नस्यभोक्तेतिव्याख्येयं । बकासुरवधादौदर्शनात् । ननुकथमिदं लभ्यते । उच्यते । भूमनिंदाप्रशंसासुभवतिमतुबादयइतिवचनाद्भूमार्थेमतुबयं । भूमाबाहुल्यं । तथाचबह्वन्नमितिसिद्ध्यति । तद्व

॥ ९९ ॥

भाष्य ॥ मध्वित्यानदउद्दिष्टोवेतितीर्थमुदाहृत । मध्वआनदतीर्थ स्यात्तृतीयामारुतीतनु । इतिसूक्तगतरूपत्रयमेतन्महात्मन । योवेदवेदवित्सस्यात्तत्वावित्तत्प्रसादतइतिच । साधकोरामवाक्यानातत्समीपगतस्सदा । हनूमान्प्रथमोज्ञेयोभीमस्तुबहुभुक्पितो । पूतनाक्षयकारीचद्वितीयस्तुतृतीयक । पूर्णप्रज्ञस्तथानदतीर्थनामाप्रकीर्तित ।

निवा० ार्थः १५ ७ ॥

त्वंचतद्गोकृत्वेनेतिद्रष्टव्यं । पृतनाक्षयकारीत्यनेनपृक्षइत्यस्य तृतीयमस्यवृषभस्यदोहसइत्यनेनदशप्रमतिशब्दोव्याख्यातः । तदुपपादयति ॥ दशोतीति ॥ इहदशेतिशब्देनसर्वमुद्दिष्टं दशेतिसर्वमितिश्रुतेः । सर्वमितिशब्देनपूर्णमुच्यते । दशसर्वपूर्ण शब्दाःपर्यायाइतियावत् । ततोदशशब्दस्यपूर्णवाचित्वात्दशप्रमतिशब्देनपूर्णप्रज्ञएवोच्यतइत्यर्थः । यदीमनुप्रदिवोमध्वआधवे गुहासतंमातरिश्वामथायतीतिव्याचष्टे ॥ आसमंतादिति ॥ आधवइत्यस्यार्थोयं । भावप्रधानत्वमभ्युपेत्यपतित्वइत्युक्तं । गुहासतमित्यस्यार्थोगूढंहरिमिति । तत्रनिमित्तमाह ॥ कलियुगइति ॥ नकेवलंकालबलाद्गूढःकिंत्वित्यतआह ॥ असत्यमिति ॥ अनीश्वरंजीवव्यतिरिक्तेश्वररहितं जीवेश्वरैक्यमितियावत् । ननुजगत्सत्यत्वेतदंतःपातिनांसर्वज्ञत्वासर्वज्ञत्वादिविरुद्धधर्माणामपिसत्यत्वात्कथंजीवेश्वरैक्यमित्यतउक्तं ॥ असत्यमिति ॥ असत्यत्वंनामनशशविषाणादीनामिवात्यंतासत्त्वमपरोक्षप्रतीतिविरोधादित्यभिप्रेत्यासत्यत्वमेवव्याचष्टे ॥ अप्रतिष्ठमिति ॥ ज्ञानबाध्यमित्यर्थः । मातरिश्वेत्युक्त्यामूलवायुप्रतीतिनिरासाय तृतीयोसुरित्युक्तं । तृतीयोसुःकलियुगेकालबलाद्गूढंतदेतज्जगदनीश्वरंवदद्भिःगूहितंसंतंहरिंआसमंतात्सर्वप्रकारेणपतित्वेसर्वस्वामित्वविषयेयथामतिब्रह्मसूत्रोपनिषदादिव्याख्यानेनहरेःपुरुषोत्तमत्वमाविष्करोतीत्यर्थः । निर्यदीबुध्नान्महिषस्यवर्पसईशानासशवसाक्रंतसूरयइत्येतद्व्याचष्टे ॥ येनेति ॥ यदित्यस्यार्थोयेनेति । तृतीयावतारेणेत्यर्थः । महिषस्येत्यस्यार्थोविष्णोरिति । वर्पस

भाष्य ॥ दशेतिसर्वमुद्दिष्टसर्वपूर्णमिहोच्यते । प्रज्ञाप्रमतिरुद्दिष्टापूर्णप्रज्ञस्तत स्मृत । आसमतात्पतित्वेतुगूढकलियुगेहरि । असत्यमप्रतिष्ठ चजगदेतदनीश्वर । वदद्भिर्गूहितसततृतीयोसुर्मथायति । येनविष्णोस्तुवर्पाख्यान्गुणानाज्ञासिपु परान् । ईशानास सूरयश्चनिगूढान्निर्गुणोक्तिभि ।

इत्यस्यार्थोविपाख्यान्गुणानिति । निराक्रांतइत्यस्यार्थःआज्ञासिषुरिति । ज्ञातवंतइत्यर्थः । ईशानासइतिबहुवचनमाद्यर्थे । ईशानाद्याःदेवाःअन्येसूरयश्चब्रह्मनिर्गुणमित्युक्तिभिर्निगूढान्गुणानित्यन्वयः । अवतारत्रयस्यकालभेदमाह ॥ त्रेतायामिति ॥ क्रमादेवेत्यन्वयः । त्रयोजाताइतिशेषः । प्रयत्पितुःपरमान्नीयतइत्यस्यतात्पर्यमाह ॥ एतेषामिति ॥ स्वयंभ्वित्यादिनाब्रह्मस्वयंभुब्रह्मणेनमइतिउपनिषदंतरगतंव्याख्यातंभवति । असौविष्णुःस्वयंभवतीतिव्युत्पत्त्यागुणपूर्णत्वेनचनिमित्तेनस्वयंभुब्रह्मसंज्ञइत्यर्थः । ब्रह्मणेनमइत्युपनिषदंतरगतब्रह्मशब्दस्यचतुर्मुखपरत्वप्रतीतिनिरासायपरस्माइत्युक्तमित्यवगंतव्यं । ततश्चायंसूक्तार्थः। बलित्थाइत्यादिसस्नुताइत्यंतस्यार्थः । सहसः सहोरूपस्य । देवस्यक्रीडादिगुणसंपन्नस्य । वायोर्मूलरूपं बट् बलात्मकं । दर्शतंज्ञानरूपं । भर्गःजगद्भरणगमनगुणं । इत्थाइत्थंभूतमेव । वपुषेरूपत्रयावताराय यतोयस्माद्भगवतोधायिनिहितंभगवताप्रेरितमित्यर्थः । तस्मादजनि । यद्वायतोवायोर्भगवानजनिव्यक्तोभूत्तस्यवायोरितिसंबंधः । प्रथमावताररूपंमतिःयदीयंदेवमतिःहनुमदाख्यंप्रथमरूपं । उपह्वरतेरामस्यसमीपेतिष्ठति।साधतेरामकार्याणिसाधयति । तेनहनुमताऋतस्यसत्यरूपस्यरामस्यसस्नुताःअमृतस्रावयुक्ताःधेनाःवाचोनयंत।सीतांशिष्यांश्चप्रतीतिशेषः । पृक्षोवपुःपितुमानित्यस्यार्थः। द्वितीयावतारस्वरूपमाह । पृक्षइति । द्वितीयंवपुर्भीमाख्यंपृक्षःपृतनाक्षयकारीपितुमान् अन्नवान् बह्वन्नभोक्तेत्यर्थः । नित्यःनित्यं । सप्तशिवासुपरममंगलरूपासु । मातृषुप्रमाणभूतासुऋ

---

भाष्यं ॥ त्रेतायांद्वापरेचैवकलौचैतेक्रमात्त्रयः । एतेषांपरमोविष्णुर्नेतासर्वेश्वरेश्वरः । स्वयंभुब्रह्मसंज्ञोसौपरस्मैब्रह्मणेनमइतिच ।

गादिषु। आशयेशेते। तद्विचाररतइतिभावः। अनेनद्वितीयावतारवाचकभीमशब्दार्थउक्तोभवति। तृतीयावतारस्वरूपमाह।तृतीय मिति। अस्यऋषभस्यश्रेष्ठस्यवायोस्तृतीयंवपुर्दोहसेज्ञानदोहाय।दशप्रमतिंपूर्णप्रज्ञनामकं।योषणोमध्यगेहभट्टपत्न्यः। गुरुत्वाद्बहुव चनं।जनयंतअजनयंत।निर्यदींबुध्ना।दित्यस्यार्थः।बुध्नात्ज्ञानरूपात्।यदींयस्मादेवमहिषस्यमहितषड्गुणस्यहरेः।वर्पसोवरणीयत्वात्पा लकत्वाद्वर्पोनामकान्गुणान्।ईशानासःरुद्राद्यादेवाः।अन्येसूरयोज्ञानिनश्च।शवसासुखेननिराकंतज्ञातवंतः।धातूनामनेकार्थत्वात्। तत्तृतीयंवपुरितिपूर्वेणसंबंधः। यदींयदेव। प्रदिवः प्रकृष्टप्रकाशरूपोमध्वःआनंदतीर्थाख्यः। मातरिश्वामातरिप्रमाणभूतऋगादौश्वय तिगच्छतीतिमातरिश्वावायुर्गुहासंतंजीवैश्वरैक्यंवदद्भिर्गूहितंहरिं।आधवेआसमंतात्पतित्वे।मथायतिविचार्यनिश्चाययतीतिभावः। प्रयत्पितुःपरमान्नीयतइत्यस्यार्थः। यत्रूपत्रयंपितुःस्वोत्पादकात्परमात्उत्तमात्विष्णोः।प्रनीयतेप्रकर्षेणप्रेर्यते। पृक्षुधःप्रश्नरूपान् वीरुधःस्तंबादीन्दंसुदंतेषुपर्यारोहतिचर्वितवच्छकलीकरोतीत्यर्थः। यत्यस्मात्कारणात्।यस्यवायोःजनुषंजन्मअवतारंउभाउभौ लक्ष्मीनारायणौइन्वतःप्रेरयतः।तस्मादितिशेषः। घृणाशुचिःलक्ष्मीनारायणयोःकृपयाशुद्धःसन्। आदित्आभ्यांलक्ष्मीनारायणा भ्यामेव।यविष्ठोभवदवरोभवदित्यर्थः। आदीन्मातृराविशदित्यस्यार्थः। गर्भसंबंधनिमित्तकदुःखलेशोपिनास्तीत्युच्यते। आदिन्मा तृरिति।यतोवायुरादित्प्रकृतलक्ष्मीनारायणप्रेरणादेवमातृराविशत्। नपुनस्तस्यगर्भवासनिमित्तकंविकर्मास्तीतिभावः।यासुमातृ

---

पूर्णागण्यगुणोदारधाम्नेनित्यायवेधसे। अमंदानंदसांद्रायप्रेयसेविष्णवेनमः॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेतैत्तिरीयोपनिषद्भाष्येतृतीयाभृगुवल्लीसंपूर्णा ॥ ३ ॥

षुआविष्टोपिआसमतांच्छुचिःशुचित्वमेवाह। उर्विये॒ति। उर्वियाउत्कृष्टयागर्भवासपीडया। अहिंस्यमानःअबाध्यमानःविवावृधेवि
शेषेणाभिवृद्धोभूदित्यर्थः। सप्तशिवासुमातृष्वाशयइत्युक्तं। तत्रविशेषमाह। अन्विति। सनाजुवःसनातनंभगवंतंजुषतेजुषीप्रीति
सेवनयोरितिधातुव्याख्यानात्। सेवंतेप्रतिपादयंतीतियावत्। सनाजुवःपूर्वाःसप्तमातृषुपूर्वंगणिताःऋगाद्याःआरुहत्प्रारुहदिति
यावत्। तत्अनुक्रमादेवउपक्रमादिलिंगैःक्रमेणैवऋगादिवेदंविचारयामासेत्यर्थः। नव्यसीषुपौरुषेयत्वेननूतनासु। अवरासुत्रिषु
इतिहासपुराणपंचरात्राख्यासुमातृषु। विधावतेउपक्रमादिविपर्यालोचनांविनैवशीघ्रमेवार्थंविचारयतीत्यर्थइति। नचेतिहासश
ब्दोक्तभारतस्यऋगाद्युत्तमत्वात्। पुराणांतर्गतस्यभागवतस्यचऋगादिवेदसमत्वात्कथमवरास्वित्युक्तमितिचेत्। अत्रकेचिच्छ
त्रिन्यायेनोपचरितमेतदित्याहुः। वस्तुतस्तुपौरुषेयत्वेनैवावरत्वंनवस्तुतः। तथाचनव्यसीष्ववरास्वितिव्याख्येयमितिसंप्रदायः।
परमात्मस्तवनमननाभ्यामेवग्रंथस्समापनीयोनतुस्वस्तुत्यैवेतिभावेनपुनःभगवंतंप्रणमतिभगवानाचर्यः॥ पूर्णेति॥ पूर्णाःप्रत्येकं
निरवधिकाः। तेजःस्वरूपंचगृहंप्राज्ञैर्धामेतिगीयतइतिवचनात्। पूर्णागण्यगुणैःउदारंउत्कृष्टंधामस्वरूपंयस्यासौतथोक्तस्तस्मैवेध
सेसर्वज्ञायेत्यशेषमतिमंगलं। यःसर्ववेदान्संप्रेर्यकारयामाससत्कृतिं। श्रीपतिंतंगुरूपास्यंभजेहंबादरायणं। श्रीमदानंदतीर्थार्यहृत्सरो
जाख्यमंदिरः। इंदिराराध्यपादाब्जःप्रीयतांबादरायणः। श्रीमदानंदतीर्थार्यचरणावाश्रयेनिशं। रुद्रादिसर्वविबुधैःसंसेव्या
विष्टदौसतां। वेदेशमुनिसंप्रोक्तसंप्रदायप्रवर्तकाः। येयादवाचार्यगुरवस्तान्भजामोनिरंतरं। श्रीमदानंदतीर्थीयाःक्ववाचोवेददुर्गमाः।
क्वाहमल्पमतिर्व्यासानुग्रहःकिंनसाधयेत्। तैत्तिरीयोपनिषदोयद्भाष्यंविवृतंमया। तज्जन्यपुण्यमखिलमवाप्नोतुगुरुर्मम। यादवा ॥१०१॥

र्यगुरोःशिष्यश्रीनिवासाख्यसूरिणा। कृतेयंभाष्यविवृतिर्भूयाद्व्याख्योपकारिणी। तैत्तिरीयोपनिषदोभाष्यस्यविवृतिस्त्वयं। पदार्थ
दीपिकाह्वास्यात्संप्रीत्यैकृष्णमध्वयोः। वेदेशतीर्थायसुपादभक्तश्रीयादवाचार्यगुरूपदिष्टः। अर्थोनिबद्धोत्रविचार्यसद्भिरार्यैरुपेक्ष्यो
नभवेदतोयं॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यतैत्तिरीयोपनिषद्भाष्यस्यटीकायां श्रीनिवासतीर्थ
विरचितायांपदार्थदीपिकायांभृगुवल्लीसंपूर्णा ॥

अयं ग्रंथः कुंभघोणस्थेन टी आर् कृष्णाचार्येण मुंबय्यां निर्णयसागर-
मुद्रणालये मुद्रयित्वा प्रकाशितः शके १८२६, सन १९०५

॥ तैत्तिरीयश्रीनिवासतीर्थीयटीकासंपूर्णा ॥